परीसहे ३ उसिण परिसहे ४ दंसमसयपरीसहे ५ अचेलपरीसहे ६ अरइपरीसहे ७ इत्थीपरीसहे८ चरियापरीसहे ९ निसीहिया-परीसहे १० सेज्जापरीसहे ११ अक्कोसपरीसहे १२ वहपरीसहे १३ जायणापरीसहे १४ अलाभपरीसहे १५ रोगपरीसहे १६ तणफासपरीसहे १७ जल्लपरीसहे १८ सक्कारपुरक्कारपरीसहे १९ पन्नापरीसहे २० अन्नाणपरीसहे २१ दंसणपरीसहे २२ ॥

श्रुतं मया आयुष्मन् ? तेन भगवता एवमाख्यातं इह खलु द्वाविंशतिः परिषहाः श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदिताः । यान् भिक्षुः श्रुत्वा ज्ञात्वा जित्वाऽभिभूय भिक्षाचर्यायां परिव्रजन् स्पृष्टो न विहन्येत कतरे खलुते द्वाविंशतिः परिषहाः श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदिताः । यान् भिक्षुः श्रुत्वा ज्ञात्वा जित्वाऽभिभूय भिक्षाचर्यायां परिव्रजन् स्पृष्टो न विहन्येत, इमे खलु ते द्वाविंशतिः परिषहाः श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदिताः यान् भिक्षुः श्रुत्वाज्ञात्वा जित्वा-ऽभिभूय भिक्षाचर्यायां परिव्रजन् स्पृष्टो न विहन्येत ते यथा— क्षुधापरिषहः १ पिपासापरिषहः २ शीतपरिषहः ३ उष्णपरिषहः ४ दंशमशकपरिषहः ५ अचेलपरिषहः ६ अरतिपरिषहः ७ स्त्रीपरिषहः ८ चर्यापरिषहः ९ निषद्यापरिषहः १० शय्यापरिषहः ११ आक्रोशपरिषहः १२ वधपरिषहः १३ याचनापरिषहः १४ अलाभपरिषहः १५ रोगपरिषहः १६ तृणस्पर्शपरिषहः १७ जल्ल परिषहः १८ सत्कारपुरस्कारपरिषहः १९ प्रज्ञापरिषहः २० अज्ञानपरिषहः २१ दर्शनपरिषहः २२

परीसहाणं पविभत्ती, कासवेणं पवेइया ।
तं भे उदाहरिस्सामि, आणुपुव्वि सुणेह मे ॥१॥
परिषहाणां प्रविभक्तिः, काश्यपेन प्रवेदिता ।
तां भवतां उदाहरिष्यामि, आनुपुर्व्या शृणुतमे ॥१॥

दिगिछापरिगए देहे, तवस्सी भिक्खू थामवं ।
नछिंदे न छिंदावए न पए न पयावए ॥२॥
दिगिच्छापरिगते देहे, तपस्वीभिक्षुः स्थामवान् ।
नच्छिद्यात् नच्छेदयेत् , नपचेत् न पाचयेत् ॥२॥

कालीपव्वंगसंकासे, किसे धमणिसंतए ।
मायन्ने असणपाणस्स, अदीणमणसो चरे ॥३॥
कालीपर्वाङ्गसंकाशः, कृशोधमनिसततः ।
मात्रज्ञोऽशनपानयोः, अदीनमनाश्चरेत् ॥३॥

तओ पुट्ठो पिवासाए, दोगुंच्छी लज्जसंजए ।
सीओदगं न सेविज्जा, वियडस्सेसणं चरे ॥४॥
ततः स्पृष्टः पिपासया, जुगुप्सी लज्जासंयतः ।
शीतोदकंन सेवेत, विकृतस्यैषणां चरेत् ॥४॥

छिन्नावाएसु पंथेसु, आउरे सुपिवासिए ।
परिसुक्कमुहादीणे, तं तितिक्खे परीसहं ॥५॥
च्छिन्नापातेषुपथिषु, आतुरः सुपिपासितः ।
परिशुष्कमुखोऽदीनः, तंतितिक्षेत परिषहम् ॥५॥

चरंतं विरयं लूहं, सीयं फुसइ एगया ।
नाइवेलं मुणी गच्छे, सोच्चाणं जिणसासणं ॥६॥
चरन्तं विरतं रूक्षं, शीतं स्पृशति एकदा ।
नातिवेलं मुनिर्गच्छेत, श्रुत्वा जिनशासनम् ॥६॥

न मे निवारणं अत्थि छवित्ताणं न विज्जई।
अहं तु अग्गिं सेवामि, इइ भिक्खू न चिंतए ॥७॥

नमे निवारणमस्ति, छविस्त्राणं न विद्यते।
अहंतु अग्निं सेवे, इति भिक्षुर्नचिन्तयेत् ॥७॥

उसिणंपरियावेणं, परिदाहेण तज्जिए।
धिंसु वा परियावेणं, सायं नो परिदेवए ॥८॥

उष्णपरितापेन, परिदाहेन तर्जितः।
ग्रीष्मेषु वा परितापेन, सातं नो परिदेवेत ॥८॥

उण्हाहितत्तो मेहावी, सिणाणं नो वि पत्थए।
गायं नो परिसिंचेज्जा, न वीएज्जा य अप्पयं ॥९॥

उष्णाभितप्तो मेधावी, स्नानं नापि प्रार्थयेत्।
गात्रंनो परिसिंचेत्, नवीजयेदात्मानम् ॥९॥

पुट्ठो य दंसमसएहिं, समरे व महामुणी।
नागो संगामसीसे वा, सूरो अभिहणे परं ॥१०॥

स्पृष्टश्चदंशमशकैः, समएव महामुनिः।
नागः संग्रामशीर्षे इव, शूरोऽभिहन्यात्परम् ॥१०॥

न संतसे न वारेज्जा, मणं पि न पओसए।
उवेहे न हणे पाणे, भुंजंते मंससोणियं ॥११॥

न संत्रसेत् न वारयेत्, मनोऽपिनो दूषयेत्।
उपेक्षेत न हन्यात् प्राणिनः, भुञ्जानान्मांसशोणितम् ॥११॥

परिजुण्णेहिं वत्थेहिं, होक्खामि त्ति अचेलए।
अदुवा सचेले होक्खामि, इइ भिक्खू न चिंतए ॥१२॥

परिजीर्णैर्वस्त्रैः, भविष्यामीत्यचेलकः।
"अथवा सचेलको भविष्यामि. इतिभिक्षुर्नचिंतयेत ॥१२॥

एगयाऽचेलए होइ, सचेले आवि एगया ।
एयं धम्महियं नच्चा, नाणी नो परिदेवए ॥१३॥

एकदाऽचेलको भवति, सचेलको वाऽपि एकदा ।
एतं धर्मं हितं ज्ञात्वा, ज्ञानी नो परिदेवेत ॥१३॥

गामाणुगामं रीयंतं, अणगारं अकिंचणं ।
अरई अणुप्पवेसेज्जा, तं तितिक्खे परीसहं ॥१४॥

ग्रामानुग्रामं रीयमाणं, अनगारमकिंचनम् ।
अरतिरनुप्रविशेत्, तं तितिक्षेत् परिषहम् ॥१४॥

अरइं पिट्ठओ किच्चा, विरए आयरक्खिए ।
धम्मारामे निरारम्भे, उवसन्ते मुणी चरे ॥१५॥

अरतिं पृष्ठतः कृत्वा, विरत आत्मरक्षकः ।
धर्मारामे निरारंभः, उपशान्तो मुनिश्चरेत् ॥१५॥

सङ्गो एस मणूसाणं, जाओ लोगम्मि इत्थिओ ।
जस्स एया परिन्नाया, सुकडं तस्स सामण्णं ॥१६॥

संग एष मनुष्याणां, या लोके स्त्रियः ।
येनैताः परिज्ञाताः, सुकृतं तस्य श्रामण्यम् ॥१६॥

एयमादाय मेहावी, पङ्कभूया उ इत्थिओ ।
नो ताहिं विणिहन्नेज्जा, चरेज्जत्तगवेसए ॥१७॥

एवमादाय मेधावी, पंकभूताः स्त्रियः ।
नो ताभिर्विहन्येत, चरेदात्मगवेषकः ॥१७॥

एग एव चरे लाढे, अभिभूय परीसहे ।
गामे वा नगरे वावि, निगमे वा रायहाणिए ॥१८॥

एक एव चरेल्लाढः, अभिभूय परिषहान् ।
ग्रामे वा नगरे वापि, निगमे वाराजधान्याम् ॥१८॥

असमाणे चरे भिक्खू, नेव कुज्जा परिग्गहं ।
असंसत्ते गिहत्थेहिं, अणिएओ परिव्वए ॥१९॥
असमानश्चरेद्भिक्षुः, नैव कुर्यात्परिग्रहम् ।
असंसक्तो गृहस्थैः, अनिकेतनः (सन्) परिव्रजेत् ॥१९॥

सुसाणे सुन्नगारे वा, रुक्खमूले व एगओ ।
अकुक्कुओ निसीएज्जा, न य वित्तासए परं ॥२०॥
श्मशाने शुन्यागारेवा, वृक्षमूले चैककः ।
अकुक्कुचः निषीदेत्, न च त्रासयेत्परम् ॥२०॥

तत्थ से चिट्ठमाणस्स, उवसग्गाभिधारए ।
संकाभीओ न गच्छेज्जा, उट्ठित्ता अन्नमासणं ॥२१॥
तत्र तस्य तिष्ठतः, उपसर्गाः (तान्) अभिधारयेत् ।
शंकाभीतो न गच्छेत्, उत्थायान्य दासनम् ॥२१॥

उच्चावयाहि सेज्जाहिं, तवस्सी भिक्खू थामवं ।
नाइवेलं विहन्निज्जा, पावदिट्ठी विहन्नई ॥२२॥
उच्चावचाभिः शय्याभिः, तपस्वी भिक्षुः स्थामवान् ।
नातिवेलं विहन्यात्, पापदृष्टिर्विहन्यात् ॥२२॥

पइरिक्कुवस्सयं लद्धुं, कल्लाणमदुव पावयं ।
किमेगराइं करिस्सइ, एवं तत्थऽहियासए ॥२३॥
प्रतिरिक्तमुपाश्रयं लब्ध्वा, कल्याणमथवा पापकम् ।
किं एकरात्रं करिष्यति, एवं तत्राधिसहेत ॥२३॥

अक्कोसेज्जा परे भिक्खुं, न तेसिं पडिसंजले ।
सरिसो होइ बालाणं, तम्हा भिक्खू न संजले ॥२४॥
आक्रोशेत्परः भिक्षुं, न तस्मै प्रतिसंज्वलेत् ।
सदृशो भवति बालानां, तस्माद्भिक्षुर्नसंज्वलेत् ॥२४॥

सोच्चाणं फरुसा भासा, दारुणा गामकण्टगा ।
तुसिणीओ उवेहेज्जा, न ताओ मणसीकरे ॥२५॥

श्रुत्वा परुषाः भाषाः, दारुणाः ग्रामकंटकाः ।
तूष्णीक उपेक्षेत, नताः (नतापो) मनसि कुर्यात् ॥२५॥

हओ न संजले भिक्खू, मणंपि न पओसए ।
तितिक्खं परमं नच्चा, भिक्खू धम्मं समायरे ॥२६॥

हतो न संज्वलेद्भिक्षुः, मनोऽपि न प्रदूषयेत् ।
तितिक्षां परमां ज्ञात्वा, भिक्षुर्धर्मं विचिन्तयेत् ॥२६॥

समणं संजयं दंतं, हणिज्जा कोइ कत्थई ।
नत्थि जीवस्स नासुत्ति, एवं पेहेज्ज संजए ॥२७॥

श्रमणं संयतं दान्तं, हन्यात्कोऽपि कुत्रचित् ।
नास्ति जीवस्य नाश इति, एवं चिन्तयेत्संयतः ॥२७॥

दुक्करं खलु भो निच्चं, अणगारस्स भिक्खुणो ।
सव्वं से जाइयं होइ, नत्थि किंचि अजाइयं ॥२८॥

दुःकरं खलु भो नित्यं, अनगारस्य भिक्षोः ।
सर्व तस्य याचितं भवति, नास्तिकिंचिदयाचितम् ॥२८॥

गोयरग्गपविट्ठस्स, पाणीनो सुप्पसारए ।
सेओ अगारवासुत्ति, इइ भिक्खू न चिंतए ॥२९॥

गोचराग्र प्रविष्टस्य, पाणिः न सुप्रसारकः ।
श्रेयानगारवासः, इति भिक्षुर्नचिन्तयेत् ॥२९॥

परेसु घासमेसेज्जा, भोयणे परिणिट्ठिए ।
लद्धे पिण्डे अलद्धे वा, नाणुतप्पेज्ज पंडिए ॥३०॥

परेषुग्रासमेषयेत् , भोजने परिनिष्ठिते ।
नानुतपेत्पण्डितः, लब्धे पिण्डे अलब्धे वा ॥३०॥

अज्जेवाहं न लब्भामि, अविलाभो सुए सिया ।
जो एवं पडिसंचिक्खे, अलाभो तं न तज्जए ॥३१॥
अद्यैवाहं न लभे, अपिलाभःश्वःस्यात् ।
यदिएवं प्रतिसमीक्षेत, अलाभस्तं न तर्जयेत् ॥३१॥
नच्चा उप्पइयं दुक्खं, वेयणाए दुहट्टिए ।
अदीणो थावए पन्नं, पुट्ठो तत्थहियासए ॥३२॥
ज्ञात्वोत्पतितंदुःखं, वेदनयादुःखार्दितः ।
अदीनःस्थापयेत्प्रज्ञां, स्पृष्टस्तत्राधिसहेत ॥३२॥
तेगिच्छं नाभिनंदेज्जा, संचिक्खत्तगवेसए ।
एवं खु तस्स सामण्णं, जं न कुज्जा न कारवे ॥३३॥
चैकित्स्यं नाभिनंदेत् , संतिष्ठेदात्मगवेषकः ।
एवंखलु तस्य श्रामण्यं, यन्नकुर्यात् न कारयेत् ॥३३॥
अचेलगस्स लूहस्स, संजयस्स तवस्सिणो ।
तणेसु सयमाणस्स, हुज्जा गायविराहणा ॥३४॥
अचेलकस्यरूक्षस्य, संयतस्य तपस्विनः ।
तृणेषुशयानस्य, भवेद्गात्रविराधना ॥३४॥
आयवस्स निवाएण, अउला हवइ वेयणा ।
एवं नच्चा न सेवंति, तंतुजं तणतज्जिया ॥३५॥
आतपस्यनिपातेन, अतुलाभवतिवेदना ।
एवंज्ञात्वा न सेवन्ते, तंतुजं तृणतर्जिताः ॥३५॥
किलिन्नगाए मेहावी, पंकेण व रएण वा ।
घिंसु वा परियावेण, सायं नो परिदेवए ॥३६॥
क्लिन्नगात्रोमेधावी, पंकेन वा रजसा वा ।
ग्रीष्मे वा परितापेन, सातं नो परिदेवेत ॥३६॥

वेएज्ज निज्जरापेही, आरियं धम्मणुत्तरं ।
जाव सरीरभेउत्ति, जल्लं काएण धारए ॥३७॥
वेदयेन् निर्जराप्रेत्ती, आर्यंधर्ममनुत्तरं ।
यावत्शरीरभेदः, जल्लं (मलं) कायेन धारयेत् ॥३७॥

अभिवायणमब्भुट्ठाणं, सामी कुज्जा निमंतणं ।
जे ताइं पडिसेवन्ति, न तेसिं पीहए मुणी ॥३८॥
अभिवादनमभ्युत्थानं, स्वामीकुर्यान्निमंत्रणं ।
येतानि प्रतिसेवन्ते, नतेभ्यःस्पृहयेन्मुनिः ॥३८॥

अणुक्कसाई अप्पिच्छे, अन्नाएसी अलोलुए ।
रसेसु नाणुगिज्झेज्जा, नाणुतप्पेज्ज पन्नवं ॥३९॥
अणुकषायोऽल्पेच्छः, अज्ञातैषी अलोलुपः,
रसेषु नानुगृध्येत् , नानुतप्येत् प्रज्ञावान् ॥३९॥

से नूणं मए पुव्वं, कम्माऽणाणफला कडा ।
जेणाहं नाभिजाणामि, पुट्ठो केणइ कण्हुई ॥४०॥
स नूनं मयापूर्वं, कर्माण्यज्ञातफलानि कृतानि।
येनाहंनाभिजानामि, पृष्टः केनाऽपि कस्मिन् ॥४०॥

अह पच्छा उइज्जन्ति, कम्माऽणाणफला कडा ।
एवमस्सासि अप्पाणं, नच्चा कम्मविवागयं ॥४१॥
अथपश्चादुदेष्यन्ति, कर्माणिनानाफलानिकृतानि ।
एवमाश्वासयात्मानं, कर्मविपाकंज्ञात्वा ॥४१॥

निरट्ठगम्मि विरओ, मेहुणाओ सुसंवुडो ।
जो सक्खं नाभिजाणामि, धम्मं कल्लाणपावगं ॥४२॥
निरर्थके विरतः, मैथुनात्सुसंवृतः ।
यदिसाक्षान्नाभिजानामि, धर्मकल्याणंपापकं ॥४२॥

तवोवहाणमादाय, पडिमं पडिवज्जओ ।
एवंपि विहरओ मे, छउमं न नियट्टई ॥४३॥
तपउपधानमादाय, प्रतिमांप्रतिपद्य ।
एवंविहरतोमे, छद्मस्थं ननिवर्तते ॥४३॥

नत्थि नूणं परेलोए, इड्ढी वावी तवस्सिणो ।
अदुवा वंचिओमित्ति, इइ भिक्खू न चिंतए ॥४४॥
नास्तिनूनंपरलोकः, ऋद्धि वापि तपस्विनः ।
अथवावञ्चितोऽस्मि, इतिभिक्षुर्नचिन्तयेत् ॥४४॥

अभू जिणा अत्थि जिणा, अदुवावि भविस्सई ।
मुसं ते एवमाहंसु, इइ भिक्खू न चिंतए ॥४५॥
अभूवन्जिनाःसन्तिजिनाः, अथवाऽपिभविष्यन्ति ।
मृषातएवमाहुः, इतिभिक्षुर्नचिन्तयेत् ॥४५॥

एए परीसहा सव्वे, कासवेण पवेइया ।
जे भिक्खू न विहम्मेज्जा, पुट्ठो केणइकण्हुई ॥४६॥
एतेपरिषहाःसर्वे, काश्यपेन प्रवेदिताः ।
यान्ज्ञात्वाभिक्षुर्नविहन्येत, पृष्टःकेनाऽपिकुत्रचित् ॥४६॥

॥ त्ति बेमि ॥ इति दुइअं परिसहज्झयणं समत्तं ॥ २ ॥
इतिब्रवीमि——द्वितीयंपरिषहाध्ययनं समाप्तम्

## ॥ अह तइअं चाउरंगिज्जं अज्झयणं ॥

॥ अथ तृतीयं चातुरङ्गीयमध्ययनं प्रारम्यते ॥

चत्तारि परमंगाणि दुल्लहाणीह जन्तुणो ।
माणुसत्तं सुई सद्धा, संजमम्मि य वीरियं ॥१॥
चत्वारि परमांगानि, दुर्लभानीह जन्तोः ।
मनुष्यत्वं श्रुतिः श्रद्धा, संयमे च वीर्यम् ॥१॥

समावन्नाण संसारे, नाणागोत्तासु जाइसु ।
कम्मा नाणाविहा कट्टु, पुढो विस्संभया पया ॥२॥

समापन्नाः संसारे, नानागोत्रेषु जातिषु ।
कर्माणि नानाविधानिकृत्वा, पृथग् विश्वभृतः प्रजाः ॥२॥

एगया देवलोएसु, नरएसु वि एगया ।
एगया आसुरं कायं, आहाकम्मेहिं गच्छई ॥३॥

एकदा देवलोकेषु, नरकेष्वप्येकदा ।
एकदाऽऽसुरं कायं, यथा कर्मभिर्गच्छति ॥३॥

एगया खत्तिओ होइ, तओ चण्डालवुक्कसो ।
तओ कीडपयंगो य, तओ कुन्थुपिवीलिया ॥४॥

एकदा क्षत्रियो भवति, ततश्चण्डालो वोक्कसो ।
ततःकीटः पतंगश्च, ततःकुंथुः पिपीलिका ॥४॥

एवमावट्टजोणीसु, पाणिणो कम्मकिव्विसा ।
ननिविज्जन्ति संसारे, सव्वट्ठेसु व खत्तिया ॥५॥

एवमावर्तयोनिषु, प्राणिनः कर्मकिल्विषाः ।
ननिर्विद्यन्ते संसारे, सर्वार्थेष्विव क्षत्रिया ॥५॥

कम्मसंगेहिं सम्मूढा, दुक्खिया बहुवेयणा ।
अमाणुसासु जोणीसु, विणिहम्मन्ति पाणिणो ॥६॥

कर्मसंगैः समूढाः, दुःखिता बहुवेदनाः ।
अमानुषीषु योनिषु, विनिहन्यन्ते प्राणिनः ॥६॥

कम्माणं तु पहाणाए, आणुपुव्वी कयाइउ ।
जीवा सोहिमणुप्पत्ता, आययंति मणुस्सयं ॥७॥

कर्मणांतु प्रहान्या, आनुपुर्व्या कदाचन ।
जीवाः शुद्धिमनुप्राप्ताः, आददते मनुष्यताम् ॥७॥

माणुस्सं विग्गहं लद्धुं, सुई धम्मस्स दुल्लहा।
जं सोच्चा पडिवज्जन्ति, तवं खंतिमहिंसयं ॥८॥
मानुष्यं विग्रहं लब्ध्वा, श्रुतिर्धर्मस्य दुर्लभा ।
यं श्रुत्वाप्रतिपद्यन्ते, तपःक्षान्तिमहिंस्रताम् ॥८॥

आहच्च सवणं लद्धुं, सद्धा परमदुल्लहा ।
सोच्चा नेआउयं मग्गं, वहवे परिभस्सई ॥९॥
कदाचिच्छ्रवणं लब्ध्वा, श्रद्धा परमदुर्लभा ।
श्रुत्वानैयायिकं मार्गं, वहवः परिभ्रश्यन्ति ॥९॥

सुई च लद्धुं सद्धं च, वीरयं पुण दुल्लहं ।
वहवे रोयमाणावि, नो य णं पडिवज्जए ॥१०॥
श्रुतं च लब्ध्वाश्रद्धांच, वीर्यपुनर्दुर्लभम् ।
वहवोरोचमानाअपि, नो एतत्प्रतिपद्यते ॥१०॥

माणुसत्तम्मि आयाओ, जो धम्मं सोच्च सद्दहे ।
तवस्सी वीरियं लद्धुं, संवुडे निद्धुणे रयं ॥११॥
मानुष्यत्व आगतः, योधर्मंश्रुत्वाश्रद्धते ।
तपस्वी वीर्यं लब्ध्वा, संवृतोनिर्धुनोतिरजः ॥११॥

सोही उज्जुयभूयस्स, धम्मो सुद्धस्स चिठ्ठई ।
निव्वाणं परमं जाइ, घयसित्तिव्व पावए ॥१२॥
शुद्धिर्भवति ऋजूभूतस्य. च धर्मः शुध्धस्यतिष्ठति ।
निर्वाणंपरमंयाति, घृतसिक्तइव पावकः ॥१२॥

विगिंच कम्मुणो हेउं, जसं संचिणु खंतिए ।
सरीरं पाढवं हिच्चा, उड्ढं पक्कमई दिसं ॥१३॥
वेविग्धिकर्मणोहेतुं, यशःसंचिनु क्षान्त्या ।
पार्थिवंशरीरंहित्वा, उर्ध्वाप्रक्रामतिदिशम् ॥१३॥

विसालिसेहिं सीलेहिं, जक्खा उत्तरउत्तरा ।
महासुक्का व दिप्पंता, मन्नंता अपुणच्चवं ॥१४॥
विसदृशैः शीलैः, यक्षाउत्तरोत्तराः ।
महाशुक्लाइवदीप्यमानाः, मन्यमाना अपुनश्च्यवम् ॥१४॥
अप्पिया देवकामाणं, कामरुवविउव्विणो ।
उड्ढं कप्पेसु चिट्ठन्ति, पुव्वा वाससया वहू ॥१५॥
अर्पितादेवकामान्, कामरुपवैक्रेयिणः ।
उर्ध्वंकल्पेषुतिष्ठन्ति, पूर्वाणिवर्षशतानि बहूनि ॥१५॥
तत्थ ठिच्चा जहाठाणं, जक्खा आउक्खए चुया ।
उवेन्ति माणुसं जोणिं, से दसंगेऽभिजायई ॥१६॥
तत्रस्थित्वायथास्थानं, यक्षाआयुःक्षयेच्युताः ।
उपयान्तिमानुषींयोनिम्, स दशांगोऽभिजायते ॥१६॥
खेत्तं वत्थुं हिरण्णं च, पसवो दासपोरुसं ।
चत्तारि कामखन्धाणि, तत्थ से उववज्जई ॥१७॥
क्षेत्रंवास्तु हिरण्यञ्च, पशवोदासपौरुषेयम् ।
चत्वारःकामस्कन्धाः, तत्र स उत्पद्यते ॥१७॥
मित्तवं नायवं होइ, उच्चागोए य वण्णवं ।
अप्पायंके महापन्ने, अभिजाए जसोवले ॥१८॥
मित्रवान्ज्ञातिवान्भवति, उच्चैर्गोत्रो वीर्यवान् ।
अल्पातंकोमहाप्राज्ञः, अभिजातोयशस्वीवली ॥१८॥
भोच्चा माणुस्सए भोए, अप्पडिरुवे अहाउयं ।
पुव्विं विसुद्धसद्धम्मे, केवलं वोहिं वुज्झिया ॥१९॥
भुक्त्वामानुष्कान्भोगान्, अप्रतिरूपान्यथायुः ।
पूर्वंविशुद्धसद्धर्मा, केवलांवोधिंवुध्ध्वा ॥१९॥

चउरंगं दुल्लहं नच्चा, संजमं पडिवज्जिया ।
तवसा धुयकम्मंसे, सिद्धे हवइ सासए ॥२०॥
चतुरंगं दुर्लभं ज्ञात्वा, संयमं प्रतिपद्य ।
तपसाधुतकर्मांशः, सिध्धोभवति शाश्वतः ॥२०॥
॥ त्ति बेमि ॥ इति चाउरंगिज्जं णाम तइअं अज्झयणं समत्तं ॥३॥
इतिब्रवीमि—इतिचतुरङ्गीयनामतृतीयमध्ययनंसमाप्तं

## ॥ अह चउत्थं असंखयं अज्झयणं ॥

### ॥ अथ चतुर्थमसंस्कृतमध्ययनं ॥

असंखयं जीविय मा पमायए, जरोवणीयस्स हु नत्थि ताणं ।
एवं विजाणाहि जणे पमत्ते, किण्णुविहिंसा अजया गहिंति ॥१॥
असंस्कृतंजीवितं मा प्रमादीः, जरोपनीतस्यखलु नास्तित्राणम् ।
एवंविजानीहिजनाःप्रमत्ताः, किंनुविहिंस्रा अयतागमिष्यन्ति॥१॥

जे पावकम्मेहि धणं मणूसा, समाययन्ती अमइं गहाय ।
पहाय ते पासपयट्टिए नरे, वेराणुबद्धा नरयं उवेंति ॥२॥
येपापकर्मभिर्धनंमनुष्याः, समाददतेअमतिं(वाअमृतमिव)गृहीत्वा
प्रहाय ते पाशप्रवर्तितानराः, वैरानुबध्धानरकमुपयान्ति ॥२॥

तेणे जहा संधिमुहे गहीए, सकम्मुणा किच्चइ पावकारी ।
एवं पया पेच्च इहं च लोए, कडाण कम्माण न मुक्ख अत्थि ॥३॥
स्तेनोयथासंधिमुखेगृहीतः, स्वकर्मणा कृत्यतेपापकारी ।
एवंप्रजाःप्रेत्येहचलोके, कृतानांकर्मणांमोक्षोनास्ति ॥३॥

संसारमावन्न परस्स अट्ठा, साहारणं जं च करेइ कम्मं ।
कम्मस्स ते तस्स उ वेयकाले, न बंधवा बंधवयं उवेंति ॥४॥
संसारमापन्नःपरस्यार्थाय, साधारणं च यत्करोतिकर्म ।
कर्मणस्तस्यतु वेदकाले, न बान्धवा बन्धुत्वमुपयान्ति ॥४॥

विज्तेण ताणं न लभे पमत्ते, इमम्मि लोए अदुवा परत्था ।
दीवप्पणट्ठेव अणंतमोहे, नेयाउयं दट्ठुमदट्ठुमेव ॥५॥
वित्तेन त्राणं न लभेत प्रमत्तः, अस्मिँल्लोकेऽथवापरत्र ।
दीपप्रणष्टइवानन्तमोहः, नैयायिकंदृष्ट्वाऽप्यदृष्ट्वेव ॥५॥

सुत्तेसु यावी पडिवुद्धजीवी, न वीससे पण्डिए आसुपन्ने ।
घोरा मुहुत्ता अवलं सरीरं, भारंडपक्खी व चरेऽपमत्ते ॥६॥
सुप्तेषु चापिप्रतिबुध्यजीवी, नविश्वस्यात्पण्डितआशुप्रज्ञः ।
घोरा मुहूर्ता अवलं शरीरम् , भारण्डपक्षीवचराऽप्रमत्तःसन् ॥६॥

चरे पयाइं परिसंकमाणो, जं किंचि पासं इह मण्णमाणो ।
लाभंत्तरे जीविय वूहइत्ता, पच्छा परिन्नाय मलावधंसी ॥७॥
चरेत्पदानि प्रतिशंकमानः, यत्किञ्चित्पाशमिहमन्यमानः ।
लाभान्तरे जीवितंबृंहयित्वा, पश्चात्परिज्ञायमलापध्वंसी ॥७॥

छन्दंनिरोहेण उवेइ मोक्खं, आसे जहा सिक्खियवम्मधारी ।
पुव्वाइं वासाइं चरेप्पमत्ते, तम्हा मुणी खिप्पमुवेइ मोक्खं ॥८॥
छंदोनिरोधेनोपैतिमोक्षम् , अश्वोयथाशिक्षितवर्मधारी ।
पूर्वाणिवर्षाणि चरेदप्रमत्तः, तस्मान्मुनिःक्षिप्रमुपैतिमोक्षम् ॥८॥

स पुव्वमेवं न लभेज्ज पच्छा, एसोवमा सासयवाइयाणं ।
विसीयई सिढिले आउयम्मि, कालोवणीए सरीरस्स भेए ॥९॥
स पूर्वमेवं न लभेतपश्चात् , एषोपमाशाश्वतवादिकानाम् ।
विषीदतिशिथिलआयुषि, कालोपनीतेशरीरस्य भेदे ॥९॥

खिप्पं न सक्केइ विवेगमेउं, तम्हा समुट्ठाय पहाय कामे ।
समिच्च लोयं समया महेसी, आयाणरक्खी चरऽप्पमत्तो ॥१०॥
क्षिप्रंनशक्नोतिविवेकमेतुं, तस्मात्समुत्थायप्रहायकामान् ।
समेत्यलोकंसमयामहर्षिः, आत्मरक्षी चराऽप्रमत्तः ॥१०॥

मुहुं मुहुं मोहगुणे जयन्तं, अणेगरूवा समणं चरन्तं।
फासा फुसन्ति असमंजसं च, न तेसि भिक्खू मणसा पउस्से॥
मुहुर्मुहुर्मोहगुणान्जयन्तं, अनेकरूपाःश्रमणंचरन्तम् ।
स्पर्शाःस्पृशन्त्यसमंजसंच, न तेषुभिक्षुर्मनसाप्रदुष्येत् ॥११॥

मन्दा य फासा बहुलोहणिज्जा, तहप्पगारेसु मणं न कुज्जा।
रक्खिज्ज कोहं विणएज्ज माणं, मायं न सेवेज्ज पहेज्ज लोहं ॥१२॥
मन्दाश्चस्पर्शा बहुलोभनीयाः, तथाप्रकारेषुमनोनकुर्यात् ।
रक्षेत्क्रोधं विनयेत मानं, मायांनसेवेतप्रजह्याल्लोभम् ॥१२॥

जे संखया तुच्छपरप्पवाई, ते पिज्जदोसाणुगया परज्झा।
एए अहम्मे त्ति दुगुंछमाणो, कंखे गुणे जाव सरीरभेउ ॥१३॥
ये संस्कृतास्तुच्छपरप्रवादिनः, तेप्रेमद्वेषानुगताःपरवशाः ।
एतेऽधर्माइतिजुगुप्समानः, कांक्षेतगुणान्यावच्छरीरभेदः ॥१३॥

॥ त्ति बेमि ॥ इति असंखयं चउत्थं अज्झयणं समत्तं ॥४॥
॥ इति ब्रवीमि इति असंस्कृतं चतुर्थमध्ययनं समाप्तं ॥

---

## ।अह अकाममरणिज्जं पञ्चमं अज्झयणं।

### ॥ अथाकाम मरणीयं पञ्चमसध्ययनं ॥

अण्णवंसि महोघंसि, एगे तिण्णे दुरुत्तरे।
तत्थ एगे महापन्ने, इमं पण्हमुदाहरे ॥१॥
अर्णवान्महौघात् , एके तीर्णा दुरुत्तरात् ।
तत्रैको महाप्रज्ञः, इमं प्रश्नमुदाहृतवान् ॥१॥

सन्तिमे य दुवे ठाणा, अक्खाया मरणन्तिया ।
अकाममरणं चेव, सकाममरणं तहा ॥२॥
स्त इमे द्वे स्थाने, आख्याते मरणान्तिके ।
अकाममरणं चैव, सकाममरण तथा ॥२॥

वालाणं अकामं तु, मरणं असइं भवे ।
पण्डियाणं सकामं तु, उक्कोसेण सइं भवे ॥३॥
बालानामकामं तु, मरणमसकृद्भवेत् ।
पण्डितानां सकामंतु, उत्कर्षेण सकृद् भवेत् ॥३॥

तत्थिमं पढमं ठाणं, महावीरेण देसियं ।
कामगिद्धे जहा वाले, भिसं कूराइं कुव्वई ॥४॥
तत्रत्यं (तत्रेदं) प्रथमं स्थानं, महावीरेण देशितम् ।
कामगृद्धः (सन्) यथाबालः, भृश क्रूराणि करोति ॥४॥

जे गिद्धे कामभोगेसु, एगे कूडाय गच्छई ।
न मे दिट्ठे परे लोए, चक्खुदिट्ठा इमा रई ॥५॥
यो गृद्धः कामभोगेषु, एकः [1]कूटायगच्छति ।
न मयादृष्टः परलोकः, चक्षुर्दृष्टेयं रतिः ॥५॥

हत्थागया इमे कामा, कालिया जे अणागया ।
को जाणइ परे लोए, अत्थि वा नत्थि वा पुणो ॥६॥
हस्तगता इमे कामाः, कालिका येऽनागताः ।
को जानाति परलोकः, अस्ति वा नास्ति वा पुनः ॥६॥

जणेण सद्धिं होक्खामि, इइ वाले पगब्भई ।
कामभोगाणुराएणं, केसं संपडिवज्जई ॥७॥
जनेन सार्धं भविष्यामि, इति बालः प्रगल्भते ।
कामभोगानुरागेण, क्लेशं स प्रतिपद्यते ॥७॥

तओ से दण्डं समारभई, तसेसु थावरेसु य ।
अट्ठाए य अणट्ठाए, भूयगामं विहिंसई ॥८॥
ततो दण्डं समारभते, त्रसेषुस्थावरेषु च ।
अर्थाय चानर्थाय, भूतग्रामं विहिनस्ति ॥८॥

---

१ नरकस्थानमा.

हिंसे वाले मुसावाई, माइल्ले पिसुणे सढे ।
भुंजमाणे सुरं मंसं, सेयमेयं ति मन्नई ॥९॥
हिंस्रो वालो मृषावादी, मायी च पिशुनः शठः ।
भुञ्जानः सुरांमांसं, श्रेयो म इदमितिमन्यते ॥९॥

कायसा वयसा मत्ते, वित्ते गिद्धे य इत्थिसु ।
दुहओ मलं संचिणइ, सिसुणागु व्व मट्टियं ॥१०॥
कायेन वचसामत्तः, वित्तेगृद्धश्चस्त्रीषु ।
द्विधामलंसंचिनोति, शिशुनाग इव मृत्तिकाम् ॥१०॥

तओ पुट्ठो आयंकेणं, गिलाणो परितप्पई ।
पभीओ परलोगस्स, कम्माणुप्पेहि अप्पणो ॥११॥
ततःस्पृष्ट आतंकेन, ग्लानःपरितप्यते ।
प्रभीतःपरलोकात् , कर्मानुप्रेक्ष्यात्मनः ॥११॥

सुया मे नरए ठाणा, असीलाणं च जा गई ।
बालाणं कूरकम्माणं, पगाढा जत्थ वेयणा ॥१२॥
श्रुतानि मयानरकस्थानानि, अशीलानां च यागतिः ।
बालानां क्रूरकर्मणाम् , प्रगाढा यत्र वेदना ॥१२॥

तत्थोववाइयं ठाणं, जहा मेयमणुस्सुयं ।
आहाकम्मेहि गच्छन्तो, सो पच्छा परितप्पई ॥१३॥
तत्रौपपातिकं स्थानम् , यथामयानुश्रुतम् ।
यथाकर्मभिर्गच्छन्सः, पश्चात्परितप्यते ॥१३॥

जहा सागडिओ जाणं, समंहिच्चा महापहं ।
विसमं मग्गमोइण्णो, अक्खे भग्गम्मि सोयई ॥१४॥
यथाशाकटिकोजानन् , समंहित्वामहापथम् ।
विषमंमार्गमुत्तीर्णः, अक्षेभग्नइवशोचति ॥१४॥

एवं धम्मं विउक्कम्म, अहम्मं पडिवज्जिया ।
वाले मच्चुमुहं पत्ते, अक्खे भग्गे व सोयई ॥१५॥
एवंधर्मंव्युत्क्रम्य, अधर्मं प्रतिपद्य ।
वालोमृत्युमुखंप्राप्तः, अक्षेभग्नइवशोचति ॥१५॥
तओ से मरणन्तम्मि, वाले संतसई भया ।
अकाम मरणं मरई, धुत्ते व कलिणाजिए ॥१६॥
ततःस मरणान्ते, वालःसंत्रस्यतिभयात् ।
अकाममरणंम्रियते, धूर्तइवकलिनाजितः ॥१६॥
एयं अकाममरणं, वालाणं तु पवेइयं ।
एत्तो सकाममरणं, पण्डियाणं सुणेह मे ॥१७॥
एतदकाममरणं, वालानांतुप्रवेदितम् ।
इतःसकाममरणम् , पण्डितानांशृणुतमे ॥१७॥
मरणं पि सपुण्णाणं, जहा मेयमणुस्सुयं ।
विप्पसण्णमणाघायं, संजयाण वुसीमओ ॥१८॥
मरणमपिसुपुण्यानां, यथामयेतदनुश्रुतम् ।
विप्रसन्नमनाघातं, संयतानां वश्यवताम् ॥१८॥
न इमं सव्वेसु भिक्खूसु, नइमं सव्वेसु गारिसु ।
नाणासीला अगारत्था, विसमसीला य भिक्खुणो ॥१९॥
नेदंसर्वेषांभिक्षूणां, नचेदंसर्वेषामगारिणाम् ।
नानाशीलाअगारस्थाः, विषमशीलाश्चभिक्षवः ॥१९॥
सन्ति एगेहिं भिक्खूहिं, गारत्था संजमुत्तरा ।
गारत्थेहि य सव्वेहिं, साहवो संजमुत्तरा ॥२०॥
सन्त्येकेभ्योभिक्षुभ्यः, गृहस्थाःसंयमोत्तराः ।
अगारस्थेभ्यःसर्वेभ्यः, साधवःसंयमोत्तराः ॥२०॥

चीराजिणं नगिणिणं, जडी संघाडिमुण्डिणं ।
एयाणि वि न तायन्ति, दुस्सीलं परियागयं ॥२१॥
चीराजिनं नग्नत्वं, जटित्वंसंघाटित्वंमुण्डत्वम् ।
एतान्यपि न त्रायन्ते, दुःशीलंपर्यायगतम् ॥२१॥
पिंडोलएव्व दुस्सीले, नरगाओ न मुच्चई ।
भिक्खाए वा गिहत्थे वा, सुव्वए कम्मई दिवं ॥२२॥
पिण्डावलगोऽपिदुःशीलो, नरकान्नमुच्यते ।
भिक्षादोवागृहस्थोवा, सुव्रतोदिवंक्रामति ॥२२॥
अगारिसामाइयंगाणि, सड्ढी काएण फासए ।
पोसहं दुहओ पक्खं, एगरायं न हावए ॥२३॥
अगारीसामायिकांगानि, श्रद्धो कायेनस्पृशति ।
पौषधमुभयोःपक्षयोः, एकरात्रं न हापयेत् ॥२३॥
एवं सिक्खासमावन्ने, गिहिवासे वि सुव्वए ।
मुच्चई छविपव्वाओ, गच्छे जक्खसलोगयं ॥२४॥
एवंशिक्षासमापन्नः, गृहिवासेऽपिसुव्रतः ।
मुच्यतेछविःपर्वण(औदारिकशरीरात्),गच्छेयक्षसलोकताम्॥२४॥
अह जे संवुडे भिक्खू, दोण्हं अन्नयरे सिया ।
सव्व दुक्खपहीणे वा, देवे वावि महिड्ढिए ॥२५॥
अथयःसंवृतोभिक्षुः, द्वयोरन्यतरस्मिन्स्यात् ।
सर्वदुःखप्रक्षीणोवा, देवोवाऽपिमहर्ध्धिकः ॥२५॥
उत्तराइं विमोहाइं, जुईमन्ताणुपुव्वसो ।
समाइण्णाइं जक्खेहिं, आवासाइं जसंसिणो ॥२६॥
उत्तराणि विमोहानि, द्युतिमन्त्यनुपूर्वशः ।
समाकीर्णानि यक्षैः, आवासानियशस्विनः ॥२६॥

दीहाउया इड्ढिमन्ता, समिद्धा कामरुविणो ।
अहुणोववन्नसंकासा, भुज्जो अच्चिमालिप्पभा ॥२७॥

(ते)दीर्घायुषोऋध्धिमन्तः, समृध्धाःकामरूपिणः ।
अधुनोत्पन्नसंकाशाः, भूयोऽर्चिमालिप्रभाः ॥२७॥

ताणि ठाणाणि गच्छन्ति, सिक्खित्ता संजमं तवं ।
भिक्खाए वा गिहित्थे वा, जे सन्ति परिनिव्वुडा ॥२८॥

तानि स्थानानिगच्छन्ति, शिक्षित्वा संयमं तपः ।
भिक्षुका वा गृहस्था वा, ये सन्ति परिनिवृत्ताः ॥२८॥

तेसिं सोच्चा सपुज्जाणं, संजयाण वुसीमओ ।
न संतसंति मरणंते, सीलवन्ता बहुस्सुया ॥२९॥

तेषां श्रुत्वा सत्पूज्यानां, संयतानां वश्यवताम् ।
न संत्रस्यन्ति मरणान्ते, शीलवन्तो बहुश्रुताः ॥२९॥

तुलिया विसेसमादाय, दयाधम्मस्स खन्तिए ।
विप्पसीएज्ज मेहावी, तहाभूएण अप्पणा ॥३०॥

तोलयित्वा विशेषमादाय, दया धर्मस्य क्षांत्या ।
विप्रसीदेन्मेधावी, तथाभूतेनात्मना ॥३०॥

तओ काले अभिप्पेए, सड्ढी तालिसमन्तिए ।
विणएज्ज लोमहरिसं, भेयं देहस्स कंखए ॥३१॥

ततः काल अभिप्रेते, श्रद्धी तादृश (गुरु) मन्तिके ।
विनयेल्लोमहर्षं, भेदं देहस्य कांक्षेत ॥३१॥

अह कालम्मि संपत्ते, आघायाय समुस्सयं ।
सकाममरणं मरई, तिण्हमन्नयरं मुणी ॥३२॥

अथकाले संप्राप्ते, आघातयन् समुच्छ्रयम् ।
सकाममरणेन म्रियते, त्रयाणामन्यतरेण मुनिः ॥३२॥

॥ त्ति बेमि ॥ इति अकाममरणिज्जं पंचमं अज्झयणं समत्तं ॥५॥
॥इति ब्रवीमि॥ इति अकाम मरणीयं पंचममध्ययनं समाप्तम् ॥

## ॥ अह खुड्डागनियंठिज्जं छट्ठं अज्झयणं ॥

### ॥ अथ क्षुल्लक निर्ग्रथीयं षष्ठमध्ययनं ॥

जावन्तऽविज्जापुरिसा, सव्वे ते दुक्खसंभवा ।
लुप्पन्ति बहुसो मूढा, संसारम्मि अणन्तए ॥१॥

यावन्तोऽविद्याः पुरुषाः, सर्वे ते दुःखसंभवाः ।
लुप्यन्ते बहुशो मूढाः, संसारेऽनन्तके ॥१॥

समिक्ख पण्डिए तम्हा, पासजाई पहे बहू ।
अप्पणा सच्चमेसेज्जा, मेत्तिं भूएसु कप्पए ॥२॥

समीक्ष्य पण्डितस्तस्मात् , पाशजातिपथान्बहून् ।
आत्मना सत्यमेषयेत् , मैत्री भूतेषु कल्पयेत् ॥२॥

माया पिया ण्हुसा भाया, भज्जा पुत्ता य ओरसा ।
नालं ते मम ताणाए, लुप्पंतस्स सकम्मुणा ॥३॥

माता पिता स्नुषा भ्राता, भार्या पुत्राश्चौरसाः ।
नालंतेममत्राणाय, लुप्यमानस्य स्वकर्मणा ॥३॥

एयमट्ठं सपेहाए, पासे समियदंसणे ।
छिन्दे गेहिं सिणेहं च, न कंखे पुव्वसंथुयं ॥४॥

एतमर्थं स्वप्रेक्षया, पश्येत् समितदर्शनः ।
छिन्द्याद्गृद्धिं स्नेहं च, न कांक्षेत पूर्वसंस्तवम् ॥४॥

गवासं मणिकुण्डलं, पसवो दासपोरुसं ।
सव्वमेयं चइत्ताणं, कामरूवी भविस्ससि ॥५॥

गवाश्वं मणिकुण्डलं, पशवो दासपौरुषम् ।
सर्वमेतत्त्यक्त्वा त्वं, कामरूपी भविष्यसि ॥५॥

थावरं जंगमं चेव, धणं धन्नं उवक्खरं ।
पच्चमाणस्स कम्मेहिं, नालंदुक्खाओ मोअणे ॥६॥

स्थावरं जंगमं चैव, धनं धान्य मुपस्करम् ।
पच्यमानस्य कर्मभिः, नालं दुःखान्मोचने ॥६॥

अज्झत्थं सव्वओ सव्वं, दिस्स पाणे पियायए ।
न हणे पाणिणो पाणे, भयवेराओ उवरए ॥७॥

अध्यात्मस्थं सर्वतः सर्वं, दृष्ट्वा प्राणान्प्रियात्मकान् ।
नहन्यात्प्राणिनः प्राणान् , भयवैरादुपरतः ॥७॥

आयाणं नरयं दिस्स, नायएज्ज तणामवि ।
दोगुञ्छी अप्पणो पाए, दिन्नं भुंजेज्ज भोयणं ॥८॥

[1]आदानं नरकमिति दृष्ट्वा, नाददीत तृणमपि ।
जुगुप्स्यात्मनः पात्रे, दत्तं भुञ्जीत भोजनम् ॥८॥

इहमेगे उ मन्नन्ति, अप्पच्चक्खाय पावगं ।
आयरियं विदित्ताणं, सव्वदुक्खा विमुच्चई ॥९॥

इहैके मन्यन्ते, अप्रत्याख्याय पापकम् ।
आर्यत्वं विदित्वा, सर्वे दुःखेभ्यो विमुच्यते ॥९॥

भणंता अकरेन्ता य, बन्धमोक्खपइण्णिणो ।
वायाविरियमेत्तेण, समासासेन्ति अप्पयं ॥१०॥

भणन्तोऽकुर्वन्तः, च बन्धमोक्षप्रतिज्ञिनः ।
वाग्वीर्यमात्रेण, समाश्वासयन्त्यात्मानम् ॥१०॥

न चित्ता तायए भासा, कुओ विज्जाणुसासणं ।
विसन्ना पावकम्मेहिं, बाला पंडियमाणिणो ॥११॥

नचित्रात्त्रायन्तेभाषाः, कुतोविद्यानुशासनम् ।
विषण्णाः पापकर्मभिः, बालाः पण्डितमानिनः ॥११॥

1 अदत्तग्रहणम्.

जे केइ सरीरे सत्ता, वण्णे रुवे य सव्वसो।
मणसा कायवक्केणं, सव्वे ते दुक्खसम्भवा ॥१२॥
ये के शरीरे सक्ताः, वर्णेरूपे च सर्वशः।
मनसा कायवाक्येन, सर्वे ते दुःख संभवाः ॥१२॥
आवन्ना दीहमद्धाणं, संसारम्मि अणन्तए।
तम्हा सव्वदिसं पस्सं, अप्पमत्तो परिव्वए ॥१३॥
आपन्ना दीर्घमध्वानं, संसारेऽनन्तके।
तस्मात्सर्वदिशं दृष्ट्वा, मुनिरप्रमत्तः परिव्रजेत् ॥१३॥
वहिया उड्ढमादाय, नावकंखे कयाइ वि।
पुव्वकम्मक्खयट्ठाए, इमं देहं समुद्धरे ॥१४॥
वाह्यमुर्ध्वं मादाय, नावकांक्षेत्कदापि च।
पूर्वकर्मक्षयार्थं, इमं देहं समुद्धरेत् ॥१४॥
विविच्च कम्मुणो हेउं, कालकंखी परिव्वए।
मायं पिंडस्स पाणस्स, कडं लद्धू ण भक्खए ॥१५॥
विविच्य कर्मणो हेतुं, कालकांक्षी परिव्रजेत्।
मात्रां पिण्डस्य पानस्य, कृतं लब्ध्वा भक्षयेत् ॥१५॥
सन्निहिं च न कुव्वेज्जा, लेवमायाए संजए।
पक्खीपत्तं समादाय, निरवेक्खो परिव्वए ॥१६॥
संनिधिं च न कुर्वीत, लेपमात्रया संयतः।
पक्षीपत्रमिव समादाय, निरपेक्षः परिव्रजेत् ॥१६॥
एसणासमिओ लज्जू, गामे अणियओ चरे।
अप्पमत्तो पमत्तेहिं, पिण्डवायं गवेसए ॥१७॥
एषणासमितो लज्जावान्, ग्रामेऽनियतश्चरेत्।
अप्रमत्तः प्रमत्तेभ्यः, पिण्डपातं गवेषयेत् ॥१७॥

एवं से उदाहु अणुत्तरनाणी, अणुत्तरदंसी अणुत्तरनाण दंसणधरे अरहा नायपुत्ते, भगवं वेसालिए वियाहिए ॥

एवं स उदाहृतवान् अनुत्तरज्ञान्यनुत्तरदर्शी अनुत्तरज्ञान-दर्शनधरः, अर्हन्ज्ञातपुत्रः भगवान् वैशालिको विख्याता ॥

॥ त्ति बेमि ॥ इति खुड्डागनियंठिज्जं छट्ठं अज्झयणं समत्तं ॥६॥

॥ इति ब्रवीमि ॥इति क्षुल्लक निर्ग्रंथीयं षष्ठमध्ययनं समाप्तं॥६॥

---

## ॥ अह एलयं सत्तमं अज्झयणं ॥

### ॥ अथैलकनाम सप्तममध्ययन ॥

जहाएसं समुद्दिस्स, कोइ पोसेज्ज एलयं ।
ओयणं जवसं देज्जा, पोसेज्जावि सयङ्गणे ॥१॥

अथादेशं समुद्दिश्य, कोऽपि पोषयेदेलकम् ।
ओदनं यवसं दद्यात्, पोषयेदपि स्वकांगणे ॥१॥

तओ से पुट्ठे परिवूढे, जायमेए मुहोदरे ।
पीणिए विउले देहे, आएसं परिकंखए ॥२॥

ततः स पुष्टः परिवृढः, जातमेदो महोदरः ।
प्रीणितो विपुलेदेहे, आदेशं परिकांक्षति ॥२॥

जाव न एइ आएसे, ताव जीवइ से दुही ।
अह पत्तम्मि आएसे, सीसं छेत्तूण भुज्जइ ॥३॥

यावन्नेत्यादेशः, तावज्जीवति स दुःखी ।
अथप्राप्त आदेशे, शीर्षं छित्वा भुज्यते ॥३॥

जहा से खलु उरब्भे, आएसाए समीहिए ।
एव वाले अहम्मिट्ठे, ईहई नरयाउयं ॥४॥

यथा सः खलूरभ्रः, आदेशाय समीहितः ।
एवंबालोऽधर्मिष्टः, ईहतेनरकायुः ॥४॥

हिंसे बाले मुसावाई, अद्धाणंमि विलोवए ।
अन्नदत्तहरे तेणे, माई कं नु हरे सढे ॥५॥

हिंस्रोबालोमृषवादी, अध्वनिविलुम्पकः ।
अन्यादत्तहरःस्तेनः, मायीकन्नुहरःशठः ॥५॥

इत्थीविसयगिद्धे य, महारंभपरिग्गहे ।
भुंजमाणे सुरं मंसं, परिवूढे परंदमे ॥६॥

स्त्रीविषयेषुगृद्धः च, महारंभपरिग्रहः ।
भुञ्जानः सुरांमासं, परिवृढः परंदमः ॥६॥

अयकक्करभोइ य, तुंडिल्ले चियलोहिए ।
आउयं नरए कंखे, जहाएसं व एलए ॥७॥

अजकर्करभोजी च, तुन्दिलः चित्तलोहितः ।
आयुर्नरकाय कांक्षति, यथाऽऽदेशमिवैडकः ॥७॥

आसणं सयणं जाणं, वित्तं कामे य भुंजिया ।
दुस्साहडं धणं हिच्चा, बहु संचिणिया रयं ॥८॥

आसनं शयनं यानं, वित्तकामान्भुक्त्वा ।
दुःखाहृतंधनत्यक्त्वा, बहु संचित्यरजः ॥८॥

तओ कम्मगुरू जंतू, पच्चुप्पन्नपरायणे ।
अय व्व आगयाएसे, मरणंतम्मि सोयई ॥९॥

ततःकर्मगुरुर्जन्तुः, प्रत्युत्पन्नपरायणः ।
अजइवागत आदेशे, मरणान्ते शोचति ॥९॥

तओ आउपरिक्खीणे, चुया देहा विहिंसगा ।
आसुरीयं दिसं बाला, गच्छन्ति अवसा तमं ॥१०॥

ततआयुषिपरिक्षीणे, च्युतदेहाविहिंसकाः ।
आसुरीदिशंबालाः, अवशागच्छन्तितामसम् ॥१०॥

जहा कागिणिए हेउं, सहस्सं हारए नरो ।
अपत्थं अम्बगं भोच्चा, राया रज्जं तु हारए ॥११॥
यथाकाकिन्याहेतोः, सहस्रंहारयेन्नरः ।
अपथ्यमाम्रकंभुक्त्वा, राजाराज्यं च हारयेत् ॥११॥
एवं माणुस्सगा कामा, देवकामाण अन्तिए ।
सहस्सगुणिया भुज्जो, आउं कामा य दिव्विया ॥१२॥
एवंमानुष्यकाःकामाः, देवकामानामन्तिके ।
सहस्रगुणिताभूयः, आयुःकामाश्चदिव्यकाः ॥१२॥
अणेगवासानउया, जा सा पन्नवओ ठिई ।
जाणि जीयन्ति दुम्मेहा, ऊणेवाससयाउए ॥१३॥
अनेक[1]वर्षनयुता, सा प्रज्ञावतःस्थितिः ।
यांज्ञात्वाऽपिविषयैः, जीयन्तेदुर्मेधसऊनेशतवर्षायुषि ॥१३॥
जहा य तिन्नि वाणिया, मूलं घेत्तूण निग्गया ।
एगो ऽत्थ लहई लाभं, एगो मूलेण आगओ ॥१४॥
यथा च त्रयोवणिजः, मूलगृहीत्वानिर्गताः ।
एकोऽत्रलभतेलाभं, एकोमूलेनागतः ॥१४॥
एगो मूलं पि हारित्ता, आगओ तत्थ वाणिओ ।
ववहारे उवमा एसा, एवं धम्मे वियाणह ॥१५॥
एकोमूलमपिहारयित्वा, आगतस्तत्र वणिक् ।
व्यवहारउपमैषा, एवंधर्मेविजानीत ॥१५॥
माणुसत्तं भवे मूलं, लाभो देवगई भवे ।
मूलच्छेएण जीवाणं, नरगतिरिक्खत्तणं धुवं ॥१६॥
मानुष्यत्वं भवेन्मूलं, लाभोदेवगतिर्भवेत् ।
मूलच्छेदेनजीवानां, नरकतिर्यक्त्वं ध्रुवम् ॥१६॥

१ नयुत ८४ लाख पूर्व सख्या विशेष.

दुहश्रो गई बालस्स, श्रावई वहमूलिया ।
देवत्तं माणुसत्तं च, जं जिए लोलयासढे ॥१७॥
द्विधागतिर्बालस्य, आपद्वधमूलिका ।
देवत्वंमनुष्यत्वंचहारितः, यस्माज्जितोलोलयाशठः ॥१७॥

तश्रो जिए सइं होइ, दुविहिं दोग्गइंगए ।
दुल्लहा तस्स उम्मग्गा, श्रद्धाए सुचिरादवि ॥१८॥
ततोजितो(विषयैः)सकृद्भवति, भवतिद्विविधांदुर्गतिगतः ।
[1]दुर्लभातस्योन्मज्जा, अद्धाप्रभूतकालेसुचिरादपि ॥१८॥

एवं जियं सपेहाए, तुलिया बालं च पण्डियं ।
मूलियं ते पवेसन्ति, माणुसिं जोणिमेन्ति जे ॥१९॥
एवंजितंसंप्रेक्ष्य, तोलयित्वाबालंचपण्डितम् ।
मूलकंतेप्रविशन्ति, मानुषींयोनिं यान्ति ये ॥१९॥

वेमायाहिं सिक्खाहिं, जे नरा गिहिसुव्वया ।
उवेन्ति माणुसं जोणिं, कम्मसच्चा हु पाणिणो ॥२०॥
विमात्राभिःशिक्षाभिः, ये नराःगृहिसुव्रताः ।
उपयान्तिमानुषींयोनिं, कर्मसत्याःखलुप्राणिनः ॥२०॥

जेसिं तु विउला सिक्खा, मूलियं ते अइच्छिया ।
सीलवन्ता सवीसेसा, श्रदीणा जन्ति देवयं ॥२१॥
येषांतुविपुलाशिक्षा, मूलकं तेऽतिक्रान्ताः ।
शीलवन्तःसविशेषाः, अदीनायान्तिदेवत्वम् ॥२१॥

एवमद्दीणवं भिक्खू, आगारिं च वियाणिया ।
कहण्णु जिच्चमेलिक्खं, जिच्चमाणे न संविदे ॥२२॥
एवमदैन्यंभिक्षुं, अगारिणं च विज्ञाय ।
कथंनुजेतव्यमीदृशं, जीयमानो न संविद्यात् ॥२२॥

१ निर्गमन=बहार निकळवु.

जहा कुसग्गे उदगं, समुद्देणसमं मिणे ।
एवं माणुस्सगा कामा, देवकामाण अंतिए ॥२३॥
यथाकुशाग्रउदकं, समुद्रेण समं मिनुयात् ।
एवं मानुष्यकाःकामाः, देवकामानामन्तिके ॥२३॥
कुसग्गमेत्ता इमे कामा, सन्निरुद्धम्मि आउए ।
कस्स हेउं पुराकाउं, जोगक्खेमं न संविदे ॥२४॥
कुशाग्रमात्रा इमे कामाः, सन्निरुद्धे आयुषि ।
कस्य हेतुं पुरस्कृत्य, योगक्षेमं न संविद्यात् ॥२४॥
इह कामाणियट्टस्स, अत्तट्ठे अवरज्झई ।
सोच्चा नेयाउयं मग्गं, जं भुज्जो परिभस्सई ॥२५॥
इह कामाऽनिर्वृतस्य, आत्मार्थोऽपराध्यति ।
श्रुत्वा नैयायिकंमार्गं, यं(श्रुत्वाऽपि)भूयः परिभ्रश्यति ॥२५॥
इह कामणियट्टस्स, अत्तट्ठे नावरज्झई ।
पूइदेहनिरोहेणं, भवे देवि त्ति मे सुयं ॥२६॥
इह कामनिर्वृतस्य, आत्मार्थोनापराध्यति ।
पूतिदेहत्यागेन, भवेद्देवइति मया श्रुतम् ॥२६॥
इड्ढी जुई जसो वण्णो, आउं सुहमणुत्तरं ।
भुज्जो जत्थ मणुस्सेसु, तत्थ से उववज्जई ॥२७॥
ऋद्धिर्द्युतिर्यशोवर्णः, आयुःसुखमनुत्तरम ।
भूयो यत्र मनुष्येषु, तत्र स उत्पद्यते ॥२७॥
बालस्स पस्स बालत्तं, अहम्मं पडिवज्जिया ।
चिच्चा धम्मं अहम्मिट्ठे, नरए उववज्जई ॥२८॥
बालस्य पश्य बालत्वं, अधर्मं प्रतिपद्य ।
त्यक्त्वा धर्ममधर्मिष्ठः, नरक उत्पद्यते ॥२८॥

धीरस्स पस्स धीरत्तं, सव्वधम्माणुवत्तिणो ।
चिच्चा अधम्मं धम्मिट्ठे, देवेसु उववज्जई ॥२९॥
धीरस्य पश्य धीरत्वं, सर्वधर्मानुवर्तिनः ।
त्यक्त्वाऽधर्मं धर्मिष्ठः, देवेषूत्पद्यते ॥२९॥

तुलियाण बालभावं, अबालं चेव पंडिए ।
चइऊण बालभावं, अबालं सेवई मुणि ॥३०॥
तोलयित्वा बालभावं, अबालं चैव पण्डितः ।
त्यक्त्वा बालभावं, अबालं सेवते मुनिः ॥३०॥

॥ त्ति बेमि ॥ इति एलयज्झयणं समत्तं ॥ ७॥
इति ब्रवीमि इत्येलकाध्ययनं समाप्तं ॥७॥

## ॥ अह काविलीयं अट्ठमं अज्झयणं ॥

अथ कापिलिकमष्टममध्ययनं

अधुवे असासयम्मी, संसारम्मि दुक्खपउराए ।
किं नाम होज्ज तं कम्मयं, जेणाहं दुग्गइं न गच्छेज्जा ॥१॥
अध्रुवेऽशाश्वते, संसारे दुःखप्रचुरे ।
किंनामतद्भवेत्कर्मकं, येनाहं दुर्गतिं न गच्छेयम् ॥१॥

विजहित्तु पुव्वसंजोयं, न सिणेहं कहिंचि कुव्वेज्जा ।
असिणेहसिणेहकरेहिं, दोसपओसेहिं मुच्चए भिक्खू ॥२॥
विहाय पूर्वसंयोग, न स्नेहं कस्मिंश्चित् ।
अस्नेहःस्नेहकरेषु(विषयेषु), दोषप्रदोषेभ्यो मुच्यते भिक्षुः ॥२॥

तो नाणदंसणसमग्गो, हियनिस्सेसाय सव्वजीवाणं ।
तेसिं विमोक्खणट्ठाए, भासई मुणिवरो विगयमोहो ॥३॥
ततो ज्ञानदर्शनसमग्रः(सन्), हितनिःश्रेयसाय सर्वजीवानाम् ।
तेषां विमोक्षार्थं, भाषते मुनिवरो विगतमोहः ॥३॥

सव्वं गंथं कलहं च, विप्पजहे तहाविहं भिक्खू ।
सव्वेसु कामजाएसु, पासमाणो न लिप्पई ताई ॥४॥
सर्वं ग्रन्थंकलहं च, विप्रजह्यात्तथाविधंभिक्षुः ।
सर्वेषु कामजातेषु, पश्यन्(अपि)न लिप्यते त्रायी ॥४॥

भोगामिसदोसविसन्ने, हियनिस्सेयसबुद्धिवोच्चत्थे ।
बाले य मन्दिए मूढे, बज्झई मच्छिया व खेलम्मि ॥५॥
भोगामिषदोषविषण्णः, हितनिःश्रेयसबुद्धिविपर्यस्तः ।
बालश्चमन्दोमूढः, बध्यते मक्षिकेव श्लेष्मणि ॥५॥

दुप्परिच्चया इमे कामा, नो सुजहा अधीरपुरिसेहिं ।
अह सन्ति सुव्वया साहू, जे तरन्ति अतरं वणिया वा ॥६॥
दुःपरित्याज्या इमे कामाः, नो सुत्यजा अधीरपुरुषैः ।
अथ सन्ति सुव्रताःसाधवः, ये तरन्त्यतरंसंसारम् ॥६॥

समणामु एगे वयमाणा, पाणवहं मिया अयाणन्ता ।
मन्दा निरयं गच्छन्ति, बाला पावियाहिं दिट्ठीहिं ॥७॥
श्रमणा एके वदन्तः, प्राणवधं मृगा अजानन्तम् ।
मन्दा नरकं गच्छन्ति, बालाः पापिकाभिर्दृष्टिभिः ॥७॥

न हु पाणवहं अणुजाणे, मुच्चेज्ज कयाइ सव्वदुक्खाणं ।
एवंआयरिएहिं अक्खायं, जेहिं इमो साहुधम्मो पन्नत्तो ॥८॥
न खलु प्राणवधमनुजानन् , मुच्यते कदाचित्सर्वदुःखैः ।
एवमाचार्यैराख्यातं, यैरेष साधुधर्मः प्रज्ञप्तः ॥८॥

पाणे य नाइवाएज्जा, से समीइ त्ति वुच्चई ताई ।
तओ से पावयं कम्मं, निज्जाइ उदगं व थलाओ ॥९॥
प्राणान्यो नातिपातयेत् , स समितइत्युच्यते त्रायी ।
तस्मात्तस्य पापकर्म, निर्यातित्युदकं स्थलादिव ॥९॥

१ परतीर्थकाः=अन्य मतवादी.

जगनिस्सिएहिं भूएहिं, तसनामेहिं थावरेहिं च ।
नो तेसिमारभे दंडं, मणसा वयसा कायसा चेव ॥१०॥

जगन्निश्रितेषु भूतेषु, त्रसेषु स्थावरेषु च ।
न तेषांदण्डमारभेत, मनसावचसाकायेन चैव ॥१०॥

सुद्धेसणाओ नच्चाणं, तत्थ ठवेज्ज भिक्खु अप्पाणं ।
जायाए घासमेसेज्जा, रसगिद्धे, न सिया भिक्खाए ॥११॥

शुद्धैषणां ज्ञात्वा, तत्र स्थापयेद् भिक्षुरात्मानम् ।
[1]यात्रायां ग्रासमेषयेत्, रसगृद्धो न स्याद्भिक्षाकः ॥११॥

पन्ताणि चेव सेवेज्जा, सीयपिंडं पुराणकुम्मासं ।
अदु वुक्कसं पलागं वा, जवणट्ठाए निसेवए मंथुं ॥१२॥

प्रान्तानि चैव सेवेत, शीतपिण्डं पुराणकुल्माषान् ।
अथवाबुक्कसं पुलाकं, यापनार्थं निषेवते मन्थुम् ॥१२॥

जे लक्खणं च सुविणं, अङ्गविज्जं च जे पउंजंति ।
न हु ते समणा वुच्चंति, एवं आयरिएहिं अक्खायं ॥१३॥

ये लक्षणं च स्वप्नं, अंगविद्यां च ये प्रयुञ्जन्ति ।
न खलु ते श्रमणा उच्यन्ते. एवमाचार्यैराख्यातम् ॥१३॥

इहजीवियं अणियमेत्ता, पभट्ठा समाहिजोएहिं ।
ते कामभोगरसगिद्धा, उववज्जन्ति आसुरे काए ॥१४॥

इहजीवित मनियंत्र्य(अनियम्य), प्रभ्रष्टाःसमाधियोगेभ्यः ।
ते कामभोगरसगृद्धाः, उत्पद्यन्त आसुरे काये ॥१४॥

तत्तो वि य उव्वट्टित्ता, संसारं बहु अणुपरियडन्ति ।
बहुकम्मलेवलित्ताणं, बोही होइ सुदुल्लहा तेसिं ॥१५॥

ततोऽपि य [2]उद्धृत्य, संसारंबहूनुपर्यटन्ति ।
बहुकर्मलेपलिप्तानाम्, बोधिर्भवतिसुदुर्लभा तेषाम् ॥१५॥

१ संयमयात्रासा. २ उद्धृत्य=फरीने.

कसिणंपि जो इमं लोयं, पडिपुण्णं दलेज्ज इक्कस्स ।
तेणावि से न संतुस्से, इइ दुप्पूरए इमे आया ॥१६॥
कृत्स्नमपि य इमंलोकं, प्रतिपूर्णं दद्यादेकस्मै ।
तेनापि स न संतुष्येत्, इति दुःपूरकोऽयमात्मा ॥१६॥
जहा लाहो तहा लोहो, लाहा लोहो पवड्ढई ।
दोमासकयं कज्जं, कोडीए वि न निट्ठियं ॥१७॥
यथा लाभस्तथा लोभः, लाभाल्लोभः प्रवर्धते ।
[1]द्विमाष कृतं कार्यं, कोटयाऽपि न निष्ठितम् ॥१७॥
नो रक्खसीसु गिज्झेज्जा, गंडवच्छासु ऽणेगचित्तासु ।
जाओ पुरिसं पलोभित्ता, खेल्लन्ति जहा व दासेहिं ॥१८॥
न [2]राक्षसीषु गृध्येत्, गण्ड वक्षस्वनेकचित्तासु ।
याः पुरुषं प्रलोभय्य, क्रीडन्ति दासैरिव ॥१८॥
नारीसु नोवगिज्झेज्जा, इत्थी विप्पजहे अणागारे ।
धम्मं च पेसलं नच्चा, तत्थ ठवेज्ज भिक्खू अप्पाणं ॥१९॥
नारीषु नोपगृध्येत्, स्त्रीर्विप्रजह्यादनगारः ।
धर्मं च पेशलं ज्ञात्वा, तत्रस्थापयेद्भिक्षुरात्मानम् ॥१९॥
इअ एस धम्मे अक्खाए, कविलेणं च विसुद्धपन्नेणं ।
तरिहिन्ति जे उ काहिन्ति, तेहिं आराहिया दुवे लोग ॥२०॥
इत्येषधर्म आख्यातः, कपिलेन च विशुद्धप्रज्ञेन ।
तरिष्यंन्ति ये तु करिष्यन्ति, तैराराधितौ द्वौलोकौ ॥२०॥
त्ति बेमि ॥ इति काविलीयं अट्ठमं अज्झयणं ॥८॥
इति ब्रवीमि—इति कापिलिकमष्टममध्ययनम् ॥

---

१ सोनानो सिक्को. २ राक्षसी समान स्त्रीने विषे.

## ॥ अह णवमं नमिपवज्जा णामज्झयणं ॥

### ॥ अथ नवमं नमिप्रव्रज्यानामाऽध्ययनम् ॥

चइऊण देवलोगाओ, उववन्नो माणुसम्मि लोगम्मि।
उवसन्तमोहणिज्जो, सरई पोराणियं जाइं ॥१॥

च्युत्वा देवलोकात्, उपपन्नो मानुषे लोके।
उपशान्तमोहनीयः, स्मरति पौराणिकां जातिम् ॥१॥

जाइं सरित्तु भयवं, सयंसंबुद्धो अणुत्तरे धम्मे।
पुत्तं ठवेत्तु रज्जे, अभिणिक्खमई नमी राया ॥२॥

जातिं स्मृत्वा भगवान्, स्वयं संबुद्धोऽनुत्तरे धर्मे।
पुत्रं स्थापयित्वा राज्ये, अभिनिःक्रामति नमिराजा ॥२॥

से देवलोगसरिसे, अन्तेउरवरगओ वरे भोए।
भुंजित्तु नमी राया, बुद्धो भोगे परिच्चयई ॥३॥

स देवलोकसदृशान्, अंतःपुरवरगतो वरान्भोगान्।
भुक्त्वा नमिराजा, बुद्धो भोगान्परित्यजति ॥३॥

मिहिलं सपुरजणवयं, बलमोरोहं च परियणं सव्वं।
चिच्चा अभिनिक्खन्तो, एगन्तमहिट्ठिओ भयवं ॥४॥

मिथिलां सपुरजनपदां, बलमवरोधं च परिजनंसर्वम्।
त्यक्त्वाऽभिनिष्क्रान्तः, एकान्तमधिष्ठितोभगवान् ॥४॥

कोलाहलगभूयं, आसी मिहिलाए पव्वयन्तम्मि।
तइया रायरिसिम्मि, नमिम्मि अभिणिक्खमन्तम्मि ॥५॥

कोलाहलकभूतम्, आसीन्मिथिलायां प्रव्रजति(सति)।
तदाराजर्षौ नमौ, अभिनिष्क्रामति ॥५॥

अब्भुट्ठियं रायरिसिं, पव्वज्जाठाणमुत्तमं।
सक्को माहणरूवेण, इमं वयणमब्बवी ॥६॥

अभ्युत्थितंराजर्षि, उत्तमं प्रव्रज्यास्थानं (प्रति) ।
शक्रो ब्राह्मणरूपेण, इदं वचनमब्रवीत् ॥६॥

किण्णु भो अज्ज मिहिलाए, कोलाहलगसंकुला ।
सुव्वन्ति दारुणा सद्दा, पासाएसु गिहेसु य ॥७॥
किन्नु भो आर्य ! मिथिलायां, कोलाहलकसंकुलाः ।
श्रूयन्तेदारुणाःशब्दाः, प्रासादेषु गृहेषु च ॥७॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमी रायरिसी, देविन्दं इणमब्बवी ॥८॥
एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमीराजर्षिः, देवेन्द्रमिदमब्रवीत् ॥८॥

मिहिलाए चेइए वच्छे, सीयच्छाए मणोरमे ।
पत्तपुप्फफलोवेए, बहूणं बहुगुणे सया ॥९॥
मिथिलायांचैत्यवृक्षे, शीतच्छायेमनोरमे ।
पत्रपुष्पफलोपेते, बहूनां बहुगुणे सदा ॥९॥

वाएण हीरमाणम्मि, चेइयम्मि मणोरमे ।
दुहिया असरणा अत्ता, एए कन्दन्ति भो खगा ॥१०॥
वातेन ह्रियमाणे, चैत्ये मनोरमे ।
दुःखिता अशरणा आर्ताः, एते क्रन्दन्ति भो ! खगाः ॥१०॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमिं रायरिसिं, देविन्दो इणमब्बवी ॥११॥
एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततोनमिंराजर्षि (प्रति), देवेन्द्र इदमब्रवीत् ॥११॥

एस अग्गी य वाऊ य, एयं डज्झइ मन्दिरं ।
भयवं अन्तेउरं तेणं, कीस णं नावपेक्खह ॥१२॥

एषोऽग्निश्चवायुश्च, एतद् दह्यते मन्दिरम् ।
भगवन् अंतःपुरं तेन, कस्मान्नावप्रेक्षसे ॥१२॥
एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमि रायरिसी, देविन्दं इणमब्बवी ॥१३॥
एतमर्थंनिशम्य, हेतुकारणनोदितः ।
ततोनमीराजर्षिः, देवेन्द्रमिदमब्रवीत् ॥१३॥
सुहं वसामो जीवामो, जेसिं मो नत्थि किंचणं ।
मिहिलाए डज्झमाणीए, न मे डज्झइ किंचणं ॥१४॥
सुखं वसामो जीवामः, येषां नो नास्ति किंचन ।
मिथिलायां दह्यमानायां, न मे दह्यते किंचन ॥१४॥
चत्तपुत्तकलत्तस्स, निव्वावारस्स भिक्खुणो ।
पियं न विज्जई किंचि, अप्पियं पि न विज्जई ॥१५॥
त्यक्तपुत्रकलत्रस्य, निर्व्यापारस्य भिक्षोः ।
प्रिय न विद्यते किंचित् , अप्रियमपिनविद्यते ॥१५॥
बहुं खु मुणिणो भद्दं, अणगारस्स भिक्खुणो ।
सव्वओ विप्पमुक्कस्स, एगन्तमणुपस्सओ ॥१६॥
बहु खलु मुनेर्भद्रं, अनगारस्य भिक्षोः ।
सर्वतो विप्रमुक्तस्य, एकान्तमनुपश्यतः ॥१६॥
एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमि रायरिसिं, देविन्दो इणमब्बवी ॥१७॥
एतमर्थ निशम्य, हेतुकारणनोदितः ।
ततो नमिराजर्षि, देवेन्द्र इदमब्रवीत् ॥१७॥
पागारं कारइत्ताणं, गोपुरट्टालगाणि च ।
उस्सूलगसयग्घीओ, तओ गच्छसि खत्तिया ॥१८॥

प्राकारं कारयित्वा, [1]गोपुरा[2]ट्टालकानि च ।
[3]उत्मूलकाः [4]शतघ्नीः, ततो गच्छ क्षत्रिय ! ॥१८॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमी रायरिसी, देविन्दं इणमब्बवी ॥१९॥
एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमीराजर्षि, देवेन्द्रमिदमब्रवीत् ॥१९॥

सद्धं नगरं किच्चा, तवसंवरमग्गलं ।
खन्ति निउणपागारं, तिगुत्तं दुप्पधंसयं ॥२०॥
श्रद्धां नगरं कृत्वा, तपः संवरमर्गलाम् ।
क्षान्ति निपुणप्राकारं, त्रिगुप्तं दुःप्रधर्षिकम् ॥२०॥

धणुं परक्कमं किच्चा, जीवं च इरियं सया ।
धिइं च केयणं किच्चाण, सच्चेण पलिमन्थए ॥२१॥
धनुः पराक्रमं कृत्वा, जीवांच्चेर्या सदा ।
धृति च केतनं कृत्वा, सत्येन परिमथ्नीयात् ॥२१॥

तवनारायजुत्तेण, भित्तूण कम्मकंचुयं ।
मुणी विगयसंगामो, भवाओ परिमुच्चए ॥२२॥
तपोनाराचयुक्तेन, भित्वा कर्मकंचुकम् ।
मुनिर्विगत संग्रामः, भवात्परिमुच्यते ॥२२॥

एयमट्ठं निसामित्ता, हेउकारणचोइओ ।
तओ नमिं रायरिसिं, देविन्दो इणमब्बवी ॥२३॥
एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमिराजर्षि, देवेन्द्र इदमब्रवीत् ॥२३॥

पासाए कारइत्ताणं, वद्धमाणगिहाणि य ।
वालग्गपोइयाओ य, तओ गच्छसि खत्तिया ॥२४॥

---

१ गढनो दरवाजो. २ कोठानो कोठो ३ खाईओ. ४ सेंकडोने हणी नाखनार यांत्रिक-हथियार विशेष

प्रासादान्कारयित्वा, वर्धमान गृहाणि च ।
बालाग्रपोतिकाश्च, ततोगच्छ क्षत्रिय ॥२४॥

एयमहं निसामित्ता, हेऊकारणचोइओ ।
तओ नमी रायरिसी, देविन्दं इणमब्बवी ॥२५॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमीराजर्षिः, देवेन्द्रमिदमब्रवीत् ॥२५॥

संसयं खलु सो कुणई, जो मग्गे कुणई घरं।
जत्थेव गन्तुमिच्छेज्जा, तत्थ कुव्वेज्ज सासयं ॥२६॥

संशयं खलु स कुरुते, यो मार्गे कुरुते गृहम् ।
यत्रैवगन्तु मिच्छेत् , तत्रैव कुर्वीत शाश्वतम् ॥२६॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ।
तओ नमिं रायरिसिं, देविन्दो इणमब्बवी ॥२७॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमिंराजर्षिं, देवन्द्र इदमब्रवीत् ॥२७॥

आमोसे लोमहारे य, गंठिभेए य तक्करे ।
नगरस्स खेमं काऊणं, तओ गच्छसि खत्तिया ॥२८॥

आमोषान्लोमहरान् , ग्रंथिभेदांश्चतस्करान् (निवार्य) ।
नगरस्य क्षेमं कृत्वा, ततो गच्छ क्षत्रिय ॥२८॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ।
तओ नमी रायरिसिं, देविन्द इणमब्बवी ॥२९॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततोनमीराजर्षिः, देवेन्द्रमिदमब्रवीत् ॥२९॥

असइं तु मणुस्सेहिं, मिच्छा दंडो पजुञ्जई ।
अकारिणोऽत्थ बज्झन्ति, मुच्चई कारओ जणो ॥३०॥

असकृत्तुमनुष्यैः, मिथ्यादण्डःप्रयुज्यते ।
अकारिणोऽत्रबध्यन्ते, मुच्यते कारको जनः ॥३०॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमिं रायरिसिं, देविन्दो इणमब्ववी ॥३१॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततोनमिंराजर्षिं, देवेन्द्रइदमब्रवीत् ॥३१॥

जे केइ पत्थिवा तुज्झं, नानमन्ति नराहिवा ।
वसे ते ठावइत्ताणं, तओ गच्छसि खत्तिया ॥३२॥

ये केचन पार्थिवास्तुभ्यं, न नमन्ति नराधिप ।
वशे तान्स्थापयित्वा, ततो गच्छ क्षत्रिय ॥३२॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमी रायरिसिं, देविंदं इणमब्ववी ॥३३॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततोनमीराजर्षिः, देवेन्द्रमिदमब्रवीत् ॥३३॥

जो सहस्सं सहस्साणं, संगामे दुज्जए जिए ।
एगं जिणेज्ज अप्पाणं, एस से परमो जओ ॥३४॥

यःसहस्रंसहस्राणां, संग्रामे दुर्जये जयेत् ।
एकंजयेदात्मानं, एष तस्य परमो जयः ॥३४॥

अप्पणामेव जुज्झाहि, किं ते जुज्झेण बज्झओ ।
अप्पणामेवमप्पाणं, जइत्ता सुहमेहए ॥३५॥

आत्मनैव सह युध्यस्व, किं ते युद्धेन बाह्यतः ।
आत्मनैवात्मानं, जित्वासुखमेधते ॥३५॥

पंचिन्दियाणि कोहं, माणं मायं तहेव लोहं च
दुज्जयं चेव अप्पाणं, सव्वं अप्पे जिए जियं ॥३६॥

पंचेन्द्रियाणि क्रोधं, मानं मायां तथैव लोभं च ।
दुर्जयं चैवमात्मानं, सर्वमात्मनि जिते जितम् ॥३६॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमिं रायरिसिं, देविन्दो इणमब्बवी ॥३७॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमिराजर्षि, देवेन्द्रमिदमब्रवीत् ॥३७॥

जइत्ता विउले जन्ने, भोइत्ता समणमाहणे ।
दत्ता भोच्चा य जिट्ठा य, तओ गच्छसि खत्तिया ॥३८॥

याजयित्वा विपुलान् यज्ञान् , भोजयित्वा श्रमणान् ब्राह्मणान् ।
दत्वा भुक्त्वा च इष्ट्वा च, ततो गच्छ क्षत्रिय ॥३८॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमी रायरिसी, देविन्दं इणमब्बवी ॥३९॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमीराजर्षिः, देवन्द्रमिदमब्रवीत् ॥३९॥

जो सहस्सं सहस्साणं, मासे मासे गवं दए ।
तस्स वि संजमो सेओ, अदिन्तस्स वि किंचण ॥४०॥

यः सहस्रं सहस्राणां, मासेमासे गवां दद्यात् ।
तस्मादपि संयमः श्रेयः, अददतोऽपिकिंचन ॥४०॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमिं रायरिसिं, देविन्दो इणमब्बवी ॥४१॥

एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमि राजर्षि, देवेन्द्र इदमब्रवीत् ॥४१॥

घोरासमं चइत्ताणं, अन्नं पत्थेसि आसमं ।
इहेव पोसहरओ, भवाहि मणुयाहिवा ॥४२॥

घोराश्रमंत्यक्त्वा, अन्यं प्रार्थयसे आश्रम।
इहैव पौषधरतः, भव मनुजाधिप ॥४२॥
एयमट्ठं निसामित्ता, हेऊकारणचोइओ।
तओ नमी रायरिसी, देविन्दं इणमब्बवी
एतमर्थं निशम्य, हेतुकारणनोदितः। ॥४३॥
ततो नमीराजर्षिः, देवेन्द्रमिदमब्रवीत्
मासे मासे तु जो बालो, कुसग्गेण तु भुंजए। ॥४३॥
न सो सुयक्खायधम्मस्स, कलं अग्घइ सोलसिं
मासे मासे तु यो बालः, कुशाग्रेण तु भुंक्ते। ॥४४॥
न सः स्वाख्यातधर्मस्य, कलामर्घति षोडशीम्
एयमट्ठं निसामित्ता, हेऊकारणचोइओ। ॥ ४४॥
तओ नमि रायरिसि, देविन्दो इणमब्बवी
एतमर्थं निशम्य, हेतुकारणनोदितः। ॥४५॥
ततो नमिराजर्षि, देवेन्द्र इदमब्रवीत्
हिरण्णं सुवण्णं मणिमुत्तं, कंसं दूसं च वाहणं। ॥४५॥
कोसं वड्ढावइत्ताणं, तओ गच्छसि खत्तिया
हिरण्यं सुवर्णं, मणिमुक्तं कांस्यं दूष्यं च वाहनम्। ॥४६॥
कोशं वर्धयित्वा, ततो गच्छ क्षत्रिय
एयमट्ठं निसामित्ता, हेऊकारणचोइओ। ॥४६॥
तओ नमी रायरिसी, देविंदं इणमब्बवी
एतमर्थं निशम्य, हेतुकारणनोदितः। ॥४७॥
ततो नमी राजर्षिः, देवेन्द्रमिदमब्रवीत्
सुवण्णरुप्पस्स उ पव्वया भवे, सिया हु केलाससमा असंखया। ॥४७॥
नरस्स लुद्धस्स न तेहिं किंचि, इच्छा हु आगाससमा अणन्तिया॥

सुवर्णस्य रूप्यस्य च पर्वता भवेयुः,
स्यात्कदाचित्खलु कैलाससमा असंख्यकाः ।
नरस्य लुब्धस्य न तैः किंचित् ,
इच्छा हु आकाशसमा अनन्तिका: ॥४८॥

पुढवी साली जवा चेव, हिरण्णं पसुभिस्सह ।
पडिपुण्णं नाल मेगस्स, इइ विज्जा तवं चरे ॥४९॥
पृथिवी शालिर्यवाश्चैव, हिरण्यं पशुभिः सह ।
प्रतिपूर्णं नालमेकस्मै, इति विदित्वा तपश्चरेत् ॥४९॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमिं रायरिसिं, देविन्दो इणमब्बवी ॥५०॥
एतमर्थं निशम्य, हेतुकारणनोदितः ।
ततो नमिंराजर्षिं, देवेन्द्र इदमब्रवीत् ॥५०॥

अच्छेरगमब्भुदए, भोए चयसि पत्थिवा ।
असन्ते कामे पत्थेसि, संकप्पेण विहम्मसि ॥५१॥
आश्चर्यमद्भूतान् , भोगान्त्यजसिपार्थिव ।
असतःकामान्प्रार्थयसे, संकल्पेन विहन्यसे ॥५१॥

एयमट्ठं निसामित्ता, हेऊकारणचोइओ ।
तओ नमी रायरिसी, देविन्दं इणमब्बवी ॥५२॥
एतमर्थंनिशम्य, हेतुकारणनोदितः ।
ततोनमीराजर्षिः, देवेन्द्रमिदमब्रवीत् ॥५२॥

सल्लं कामा विसं कामा, कामा आसीविसोवमा ।
कामे पत्थेमाणा, अकामा जन्ति दोग्गइं ॥५३॥
शल्यंकामा:विषंकामाः, कामाआशीविषोपमाः ।
कामान्प्रार्थयमाना (अपि,) अकामा यान्ति दुर्गतिम ॥५३॥

अहे वयन्ति कोहेणं, माणेणं अहमा गई ।
माया गई पडिग्घाओ, लोभाओ दुहओ भयं ॥५४॥
अधोव्रजन्तिक्रोधेन, मानेनाधमागतिः ।
मायया सुगतिप्रतिघातः, [1]लोभाद्द्विधाभयम् ॥५४॥

अवउज्झिऊण माहणरूवं, विउव्विऊण इन्दत्तं ।
वन्दइ अभित्थुणन्तो, इमाहि महुराहिं वग्गूहिं ॥५५॥
[2]अपोह्य ब्राह्मणरूपं, विकृत्येन्द्रत्वम ।
वन्दतेऽभिष्टुवन् , आभिर्मधुराभिर्वाग्भिः ॥५५॥

अहो ते निज्जिओ कोहो, अहो माणो पराजिओ ।
अहो निरक्किया माया, अहो लोभो वसीकओ ॥५६॥
अहोत्वयानिर्जितःक्रोधः, अहो च मानःपराजितः ।
अहो माया निराकृता, अहो लोभो वशीकृतः ॥५६॥

अहो ते अज्जवं साहु, अहो ते साहु मद्दवं ।
अहो ते उत्तमाखन्ती. अहो ते मुत्ति उत्तमा ॥५७॥
अहो ते आर्जवं साधु, अहो ते साधु मार्दवं ।
अहोतवोत्तमाक्षान्तिः, अहो ते मुक्तिरुत्तमा ॥५७॥

इहं सि उत्तमो भन्ते, पच्छा होहिसि उत्तमो ।
लोगुत्तमुत्तमं ठाणं, सिद्धिं गच्छसि नीरओ ॥५८॥
इहा स्युत्तमो भगवन् , पश्चाद्भविष्यस्युत्तमः ।
लोकोत्तमोत्तमंस्थानं, सिद्धिं गच्छसि निरजाः ॥५८॥

एवं अभित्थुणन्तो, रायरिसिं उत्तमाए सद्धाए ।
पयाहिणं करेन्तो, पुणो पुणो वन्दई सक्को ॥५९॥
एवमभिष्टुवन् , राजर्षिमुत्तमयाश्रद्धया ।
प्रदक्षिणांकुर्वन् । पुनःपुनर्वन्दते शक्रः ॥५९॥

१ आलोक ने परलोक. २ छोडी दइने

तो वन्दिऊण पाए, चक्कंकुसलक्खणे मुणिवरस्स ।
आगासेणुप्पइओ, ललियचवलकुंडलतिरीडी ॥६०॥

ततोवन्दित्वा पादौ, चक्रांकुशलक्षणौ मुनिवरस्य ।
आकाशेनोत्पतितः, ललितचपलकुण्डलकिरीटी ॥६०॥

नमी नमेइ अप्पाणं, सक्खं सक्केण चोइओ ।
चइऊण गेहं च वेदेही, सामण्णे पज्जुवट्ठिओ ॥६१॥

नमिर्नमयत्यात्मानं, साक्षाच्छक्रेण नोदितः ।
त्यक्त्वागृहं च वैदेही, श्रामण्ये पर्युपस्थितः ॥६१॥

एवं करेन्ति संबुद्धा, पंडया पवियक्खणा ।
विणियट्टन्ति भोगेसु, जहा से नमी रायरिसि ॥६२॥

एवंकुर्वन्तिसंबुद्धाः, पण्डिताःप्रविचक्षणाः ।
विनिवर्तन्तेभोगेभ्यः, यथा स नमीराजर्षिः ॥६२॥

॥ त्ति बेमि ॥ इति नमिपव्वज्जा नाम नवमं अज्झयणं समत्तं ॥९॥
इतिब्रवीमि--इतिनमिप्रव्रज्यानामनवममध्ययनम् समाप्तं

## ॥ अह दुमपत्तयं दसमं अज्झयणं ॥

### ॥ अथ द्रुमपत्रकंदशममध्ययनं ॥

दुमपत्तए पंडुयए जहा, निवडइ राइगणाण अच्चए ।
एवं मणुयाण जीवियं, समयं गोयम मा पमायए ॥१॥

द्रुमपत्रकंपाण्डुरकं यथा, निपततिरात्रिगणानामत्यये ।
एवंमनुजानांजीवितं, समयंगौतम मा प्रमादीः ॥१॥

कुसग्गे जह ओसबिन्दुए, थोवं चिट्ठइ लम्बमाणए ।
एवं मणुयाण जीवियं, समयं गोयम मा पमायए ॥२॥

कुशाग्रे यथाऽवश्यायबिन्दुः, स्तोकंतिष्ठतिलम्बमानकः ।
एवंमनुजानां जीवितं, समयगौतम मा प्रमादीः ॥२॥

इ इत्तरियम्मि आउए, जीवियए बहुपच्चवायए ।
वेहुणाहि रयं पुरे कडं, समयं गोयम मा पमायए ॥३॥
इतीत्वर आयुषि, जीवितके बहुमत्युपायके ।
विधुनीहि रजः(कर्म)पुराकृतं, समय गौतम मा प्रमादीः ॥३॥

ुल्लहे खलु माणुसे भवे, चिरकालेण वि सव्वपाणिणं ।
गाढा य विवाग कम्मुणो, समयं गोयम मा पमायए ॥४॥
दुर्लभः खलु मानुष्यो भवः, चिरकालेनापि सर्वप्राणिनाम् ।
गाढाश्चविपाकाःकर्मणां, समयं गौतम मा प्रमादीः ॥४॥

ुढविकायमइगओ, उक्कोसं जीवो उ संवसे ।
कालं संखाईयं, समयं गोयम मा पमायए ॥५॥
पृथिवीकायमतिगतः, उत्कर्षतोजीवस्तुसंवसेत् ।
कालं सख्यातीतं, समय गौतम मा प्रमादीः ॥५॥

आउकायमइगओ, उक्कोसं जीवो उ संवसे ।
कालं संखाईयं, समयं गोयम मा पमायए ॥६॥
अपूकायमतिगतः उत्कर्षतोजीवस्तुसंवसेत् ।
काल संख्यातीतं, समयं गौतम मा प्रमादीः ॥६॥

तेउकायमइगओ, उक्कोसं जीवो उ संवसे ।
कालं संखाईयं, समयं गोयम मा पमायए ॥७॥
तेजःकायमतिगतः, उत्कर्षतोजीवस्तुसंवसेत् ।
काल संख्यातीतं, समय गौतम मा प्रमादीः ॥७॥

वाउकायमइगओ, उक्कोसं जीवो उ संवसे ।
कालं संखाईयं, समयं गोयम मा पमायए ॥८॥
वायुकायमतिगतः, उत्कर्षतोजीवस्तुसंवसेत् ।
कालं संख्यातीतं, समयं गौतम मा प्रमादीः ॥८॥

वणस्सइकायमइगओ, उक्कोसं जीवो उ संवसे।
कालमणन्तदुरन्तयं, समयं गोयम मा पमायए ॥९॥

वनस्पतिकायमतिगतः, उत्कर्षतो जीवस्तुसंवसेत् ।
कालमनन्तं दुरन्तं, समयं गौतम मा प्रमादीः ॥९॥

वेइन्दियकायमइगओ, उक्कोसं जीवो उ संवसे ।
कालं संखिज्जसन्नियं, समयं गोयम मा पमायए ॥१०॥

द्वीन्द्रियकायमतिगतः, उत्कर्षतोजीवस्तुसंवसेत् ।
कालं संख्येयसंज्ञितं, समयं गौतम मा प्रमादीः ॥१०॥

तेइन्दिकायमइगओ, उक्कोसं जीवो उ संवसे ।
कालं संखिज्जसन्नियं, समयं गोयम मा पमायए ॥११॥

त्रीन्द्रियकायमतिगतः, उत्कर्षतोजीवस्तुसंवसेत् ।
कालं संख्येयसंज्ञितं, समयं गौतम मा प्रमादीः ॥११॥

चउरिन्दियकायमइगओ, उक्कोसं जीवो उ संवसे ।
कालं संखिज्जसन्नियं, समयं गोयम मा पमायए ॥१२॥

चतुरिन्द्रियकायमतिगतः, उत्कर्षतोजीवस्तुसंवसेत् ।
कालं संख्येयसंज्ञितं, समयं गौतम मा प्रमादीः ॥१२॥

पंचिन्दियकायमइगओ, उक्कोसं जीवो उ संवसे ।
सत्तट्ठभवगहणे, समयं गोयम मा पमायए ॥१३॥

पंचेन्द्रियकायमतिगतः, उत्कर्षतोजीवस्तुसंवसेत् ।
सप्ताष्टभवग्रहणानि, समयं गौतम मा प्रमादीः ॥१३॥

देवे नेरइए अइगओ, उक्कोसं जीवो उ संवसे ।
इक्केक्कभवगहणे, समयं गोयम मा पमायए ॥१४॥

देवान्नैरयिकांश्चातिगतः, उत्कर्षतो जीवस्तु संवसेत् ।
एकैकभवग्रहणं, समयं गौतम मा प्रमादीः ॥१४॥

एवं भवसंसारे, संसरइ सुहासुहेहिं कम्मेहिं ।
जीवो पमायबहुलो, समयं गोयम मा पमायए ॥१५॥

एवं भवसंसारे, संसरति शुभाशुभैः कर्मभिः ।
जीवः बहुलप्रमादः, समयं गौतम मा प्रमादीः ॥१५॥

लद्धूण वि माणुसत्तणं, आरिअत्तं पुणरवि दुल्लहं ।
बहवे दसुया मिलक्खुया, समयं गोयम मा पमायए ॥१६॥

लब्ध्वापि मानुषत्वं, आर्यत्वं पुनरपिदुर्लभम् ।
बहवो दस्यवो म्लेच्छाः, समयं गौतम मा प्रमादीः ॥१६॥

लद्धूण वि आरियत्तणं, अहीणपंचेन्द्रियया हु दुल्लहा ।
विगलिन्दियया हु दीसई, समयं गोयम मा पमायए ॥१७॥

लब्ध्वाप्यार्यत्वं, अहीनपंचेन्द्रियता खलु दुर्लभा ।
विकलेन्द्रियता खलु दृश्यते, समयं गौतम मा प्रमादीः ॥१७॥

अहीणपंचेन्द्रियत्तं पि से लहे, उत्तमधम्मसुई हु दुल्लहा ।
कुतित्थिनिसेवए जणे, समयं गोयम मा पमायए ॥१८॥

अहीनपंचेन्द्रियत्वमपि स लभते, उत्तमधर्मश्रुतिःखलुदुर्लभा ।
कुतीर्थिनिषेवको जनो (दृश्यते), समयं गौतम मा प्रमादीः॥१८॥

लद्धूण वि उत्तमं सुइं, सद्दहणा पुणरवि दुल्लहा ।
मिच्छत्तनिसेवए जणे, समयं गोयम मा पमायए ॥१९॥

लब्ध्वाप्युत्तमां श्रुतिं, श्रद्धानं पुनरपि दुर्लभम् ।
मिथ्यात्वनिषेवको जनो (दृश्यते), समयं गौतम मा प्रमादीः॥१९॥

धम्मं पि हु सद्दहन्तया, दुल्लहया काएण फासया ।
इह कामगुणेहि मुच्छिया, समयं गोयम मा पमायए ॥२०॥

धर्ममपि खलु श्रद्दधतः, दुर्लभकाः कायेन स्पर्शकाः ।
इह कामगुणैर्मूर्च्छिता (दृश्यन्ते), समयं गौतम मा प्रमादीः॥२०॥

परिजूरइ ते सरीरयं, केसा पण्डुरया हवन्ति ते ।
से सोयबले य हायई, समयं गोयम मा पमायए ॥२१॥
परिजीर्यति तव शरीरकं, केशाः पाण्डुरका भवन्ति ते ।
तच्छ्रोत्रबलंचहीयते, समयं गौतम मा प्रमादीः ।२१॥
परिजूरइ ते सरीरयं, केसा पण्डुरया हवन्ति ते ।
से चक्खुबले य हायई, समयं गोयम मा पमायए ॥२२॥
परिजीर्यति तव शरीरकं, केशाःपाण्डुरका भवन्ति ते ।
तच्चक्षुर्बलंचहीयते, समयं गौतम मा प्रमादीः ॥२२॥
परिजूरइ ते सरीरयं, केसा पण्डुरया हवन्ति ते ।
से घाणबले य हायई, समयं गोयम मा पमायए ॥२३॥
परिजीर्यति तवशरीरकं, केशा:पाण्डुरकाभवन्तिते ।
तद्घ्राणबलं च हीयते, समयं गौतम मा प्रमादीः ॥२३॥
परिजूरइ ते सरीरयं, केसा पण्डुरया हवन्ति ते ।
से जिब्भबले य हायई, समयं गोयम मा पमायए ॥२४॥
परिजीर्यति ते शरीरकं, केशा:पाण्डुरका भवन्ति ते।
तज्जिह्वाबलं च हीयते, समयं गौतम मा प्रमादीः ॥२४॥
परिजूरइ ते सरीरयं, केसा पण्डुरया हवन्ति ते ।
से फासबले य हायई, समयं गोयम मा पमायए ॥२५॥
परिजीर्यति ते शरीरकं, केशाःपाण्डुरका भवन्ति ते ।
तत्स्पर्शबलं च हीयते, समयं गौतम मा प्रमादीः ॥२५॥
परिजूरइ ते सरीरयं, केसा पण्डुरया हवन्ति ते ।
से सव्वबले य हायई, समयं गोयम मा पमायए ॥२६॥
परिजीर्यति ते शरीरकं, केशा·पाण्डुरका भवन्ति ते ।
तत्सर्वबलं च हीयते, समयं गौतम मा प्रमादीः ॥२६॥

अरई गण्डं विसूइया, आयंका विविहा फुसन्ति ते ।
विहडइ विद्धंसइ ते सरीरयं, समयं गोयम मा पमायए ॥२७॥
अरतिर्गण्डंविसूचिका, आतंका विविधाःस्पृशन्ति ते ।
विहीयतेविध्वस्यति ते शरीरकं, समय गौतम मा प्रमादीः॥२७॥
वोच्छिन्द सिणेहमप्पणो, कुमुयं सारइयं व पाणियं ।
से सव्वसिणेहवज्जिए, समयं गोयम मा पमायए ॥२८॥
व्युच्छिन्द्धि स्नेहमात्मनः, कुमुदं शारदमिव पानीयम् ।
तत्सर्वस्नेहवर्जितः, समयं गौतम मा प्रमादीः ॥२८॥
चिच्चाण धणं च भारियं, पव्वइओ हि सि अणगारियं ।
मा वन्तं पुणो वि आविए, समयं गोयम मा पमायए ॥२९॥
त्यक्त्वा धनं च भार्यां, प्रव्रजितोऽस्यनगारिताम् ।
मा वान्तंपुनरप्यापिबेः, समयं गौतम मा प्रमादीः ॥२९॥
अवउज्झिय मित्तवन्धवं, विउलं चेव धणोहसंचयं ।
मा तं विइयं गवेसए, समयं गोयम मा पमायए ॥३०॥
अपोह्य मित्रबान्धवं, विपुलं चैव धनौघसंचयम् ।
मा त्वं द्वितीयवारं गवेषय, समयं गौतम मा प्रमादीः ॥३०॥
न हु जिणे अज्ज दिस्सई, बहुमए दिस्सइ मग्गदेसिए ।
संपइ नेयाउए पहे, समयं गोयम मा पमायए ॥३१॥
*न खलुजिनोऽद्यदृश्यते,(तथापि) [1]बहुमतःखलुदृश्यते[2]मार्गदेशकः
सम्प्रति नैयायिके पथि, समयंगौतम मा प्रमादीः ॥३१॥
अवसोहिय कण्टगापहं, ओइण्णोसि पहं महालयं ।
गच्छसि मग्गं विसोहिया, समयं गोयम मा पमायए ॥३२॥

* आ बेउ पादोमा प्रभुए गौतमने स्थिर करव। भविष्यमा पण भव्य पुरुषो शुं मानीने स्थिर थशे ? ते बताव्युं छे

१ घणा पुरुषोए आचरेलो. २ मोक्ष बतावनार (मार्ग)

अवशोध्य कंटकपथं, अवतीर्णोऽसि पन्थानं महालयं ।
गच्छसि मार्गविशोध्य, समयं गौतम मा प्रमादीः ॥३२॥

अवले जह भारवाहए, मा मग्गे विसमे वगाहिया ।
पच्छा पच्छाणुतावए, समयं गोयम मा पमायए ॥३३॥

अवलो यथा भारवाहकः, मा (त्वंभूः) मार्गं विषमवगाह्य ।
पश्चात्पश्चादनुतप्यते, समयं गौतम मा प्रमादीः ॥३३॥

तिण्णो हु सि अण्णवं महं, किं पुण चिठ्ठसि तीरमागओ ।
अभितुर पारं गमित्तए, समयं गोयम मा पमायए ॥३४॥

तीर्णःखल्व स्यर्णवं महान्तं, किं पुनस्तिष्ठसि तीरमागतः ।
अभित्वरस्व पारं गन्तुं, समयं गौतम मा प्रमादीः ॥३४॥

अकलेवरसेणिं उस्सिया, सिद्धिं गोयम लोयं गच्छसि ।
खेमं च सिवं अणुत्तरं, समयं गोयम मा पमायए ॥३५॥

अकलेवरश्रेणिमुच्छ्रित्य, सिद्धिं गौतम लोकं गच्छसि ।
क्षेमं च शिवमानुत्तरं, समयं गौतम मा प्रमादीः ॥३५॥

बुद्धे परिनिव्वुडे चरे, गामगए नगरे व संजए ।
सन्तीमग्गं च वूहए, समयं गोयम मा पमायए ॥३६॥

बुद्धः परिनिवृतश्चर, ग्रामगतो नगरे वा संयतः ।
शान्तिमार्गं च बृंहयेः, समयंगौतम मा प्रमादीः ॥३६॥

बुद्धस्स निसम्म भासियं, सुकहियमठ्ठपओवसोहियं ।
रागं दोसं च छिन्दिया, सिद्धिगइं गए गोयमे ॥३७॥

बुद्धस्य निशम्य भाषितं, सुकथितमर्थपदोपशोभितम् ।
रागं द्वेषं च छित्त्वा, सिद्धिगतिं गतो गौतमः ॥३७॥

॥ त्ति बेमि ॥ इति दुमपत्तयं समत्तं ॥१०॥
इति ब्रवीमि—इतिद्रुमपत्रकं समाप्तम् ॥

## ॥ अह बहुस्सुयपुज्जं एगारसं अज्झयणं ॥

### ॥ अथ बहुश्रुतपूजमेकादशमध्ययनम् ॥

संजोगा विप्पमुक्कस्स, अणगारस्स भिक्खुणो ।
आयारं पाउकरिस्सामि, आणुपुव्विं सुणेह मे ॥१॥

संयोगाद्विप्रमुक्तस्य, अनगारस्य भिक्षोः ।
आचारं प्रादुःकरिष्यामि, आनुपुर्व्या शृणुत मे ॥१॥

जे यावि होइ निव्विज्जे, थद्धे लुद्धे अणिग्गहे ।
अभिक्खणं उल्लवई, अविणीए अबहुस्सुए ॥२॥

यश्चापि भवति निर्विद्यः, स्तब्धोलुब्धोऽनिग्रहः ।
अभीक्ष्णमुल्लपति, अविनीतोऽबहुश्रुतः ॥२॥

अह पंचहिं ठाणेहिं, जहिं सिक्खा न लब्भई ।
थम्भा कोहा पमाएणं, रोगेणालस्सएण य ॥३॥

अथ पंचभिःस्थानैः, यैःशिक्षा न लभ्यते ।
स्तंभात्क्रोधात्प्रमादेन, रागेणालस्येन च ॥३॥

अह अट्ठहिं ठाणेहिं, सिक्खासीलि त्ति वुच्चई ।
अहस्सिरे सया दन्ते, न य मम्ममुदाहरे ॥४॥

अथाष्टभिःस्थानैः, शिक्षाशील इत्युच्यते ।
अहसनशीलःसदा दान्तः, न च मर्मोदाहरः ॥४॥

नासीले न विसीले, न सिया अइलोलुए ।
अकोहणे सच्चरए, सिक्खासीलि त्ति वुच्चई ॥५॥

नाऽशीलो न विशीलः, न स्यादतिलोलुपः ।
अक्रोधनःसत्यरतः, शिक्षाशील इत्युच्यते ॥५॥

अह चोद्दसहिं ठाणेहिं, वट्टमाणे उ संजए ।
अविणीए-वुच्चई सो उ, निव्वाणं च न गच्छइ ॥६॥

अथ चतुर्दशसु स्थानेषु, वर्तमानस्तु संयतः ।
अविनीत उच्यते स तु, निर्वाणं च न गच्छति ॥६॥

अभिक्खणं कोही हवइ, पबन्धं च पकुव्वई ।
मेत्तिज्जमाणो वमइ, सुयं लध्धूणमज्जई ॥७॥
अभीक्ष्णं क्रोधी भवति, प्रबन्धं च प्रकरोति ।
मैत्रीयमाणो वमति, श्रुतं लब्ध्वा माद्यति ॥७॥

अवि पावपरिक्खेवी, अवि मित्तेसु कुप्पई ।
सुप्पियस्सावि मित्तस्स, रहे भासइ पावयं ॥८॥
अपि पापपरिक्षेपी, अपि मित्रेभ्यः कुप्यति ।
सुप्रियस्यापि मित्रस्य, रहसि भाषते पापकम् ॥८॥

पइण्णवाई दुहिले, थद्धे लुद्धे अणिग्गहे ।
असंविभागी अवियत्ते, अविणीए त्ति वुच्चई ॥९॥
प्रकीर्णवादी द्रोहशीलः, स्तब्धो लुब्धोऽनिग्रहः।
असंविभाग्यप्रीतिकरः, अविनयीत्युच्यते ॥९॥

अह पन्नरसहिं ठाणेहिं, सुविणीए त्ति वुच्चई ।
नीयावत्ती अचवले, अमाई अकुऊहले ॥१०॥
अथ पंचदशभिःस्थानैः, सुविनीत इत्युच्यते ।
नीचवर्त्यचपलः, अमाय्यकुतूहलः ॥१०॥

अप्पं च अहिक्खिवई, पबन्धं च न कुव्वई ।
मेत्तिज्जमाणो भयई, सुयं लध्धुं न मज्जई ॥११॥
अल्पं चाऽधिक्षिपति, (क्रोधवर्धं) प्रबन्धं च न करोति ।
मैत्रीयमाणो भजते, श्रुतं लब्ध्वा न माद्यति ॥११॥

न य पावपरिक्खेवी, न य मित्तेसु कुप्पई ।
अप्पियस्सावि मित्तस्स, रहे कल्लाण भासई ॥१२॥

न च पापपरिक्षेपी, न च मित्रेभ्यःकुप्यति ।
अप्रियस्यापि मित्रस्य, रहसि कल्याणं भाषते ॥१२॥
कलहडमरवज्जिए, बुद्धे अभिजाइए ।
हिरिमं पडिसंलीणे, सुविणीए त्ति वुच्चइ ॥१३॥
कलहडमरवर्जकः बुद्धोऽभिजातिकः ।
ह्रीमान् प्रतिसंलीनः, सुविनीत इत्युच्यते ॥१३॥
वसे गुरुकुले निच्चं, जोगवं उवहाणवं ।
पियंकरे पियंवाई, से सिक्खं लद्धुमरिहई ॥१४॥
वसेद्गुरुकुले नित्यं, योगवानुपधानवान् ।
प्रियङ्करः प्रियंवादी, स शिक्षां लब्धुमर्हति ॥१४॥
जहा संखम्मि पयं, निहियं दुहओ वि विरायइ ।
एवं बहुस्सुए भिक्खू, धम्मो कित्ती तहा सुयं ॥१५॥
यथा शंखे पयो, निहितं द्विधापि विराजते ।
एवं बहुश्रुते भिक्षौ, धर्मःकीर्तिस्तथाश्रुतम् ॥१५॥
जहा से कम्बोयाणं, आइण्णे कन्थए सिया ।
आसे जवेण पवरे, एवं हवइ बहुस्सुए ॥१६॥
यथा स कम्बोजानां, आकीर्णःकन्थकः स्यात् ।
अश्वो जवेन प्रवरः, एवं भवति बहुश्रुतः ॥१६॥
जहाइण्णसमारूढे, सूरे दढपरक्कमे ।
उभओ नन्दिघोसेणं, एवं हवइ बहुस्सुए ॥१७॥
यथाऽऽकीर्णसमारूढः, शूरो दृढपराक्रमः ।
उभयतो नंदिघोषेण, एवं भवति बहुश्रुतः ॥१७॥
जहा करेणुपरिकिण्णे, कुंजरे सट्ठिहायणे ।
बलवन्ते अप्पडिहए, एवं हवइ बहुस्सुए ॥१८॥

यथाकरेणुपरिकीर्णः, कुञ्जरःषष्टिहायनः ।
बलवानप्रतिहतः, एवं भवति बहुश्रुतः ॥१८॥

जहा से तिक्खसिंगे, जायखन्धे विरायई ।
वसहे जूहाहिवई, एवं हवइ बहुस्सुए ॥१९॥

यथा स तीक्ष्णशृंगः, जातस्कन्धो विराजते ।
वृषभो यूथाधिपतिः, एवं भवति बहुश्रुतः ॥१९॥

जहा से तिक्खदाढे, उदग्गे दुप्पहंसए ।
सीहे मियाण पवरे, एवं हवइ बहुस्सुए ॥२०॥

यथा स तीक्ष्णदंष्ट्रः, उदग्रो दुष्प्रधर्षः ।
सिंहो मृगाणां प्रवरः, एवं भवति बहुश्रुतः ॥२०॥

जहा से वासुदेवे, संखचक्कगयाधरे ।
अप्पडिहयबले जोहे, एवं हवइ बहुस्सुए ॥२१॥

यथा स वासुदेवः, शंखचक्रगदाधरः ।
अप्रतिहतबलो योधः, एवं भवति बहुश्रुतः ॥२१॥

जहा से चाउरन्ते, चक्कवट्टी महिड्ढिए ।
चोद्दसरयणाहिवई, एवं हवइ बहुस्सुए ॥२२॥

यथा स चतुरन्तः, चक्रवर्ती महर्द्धिकः ।
चतुर्दशरत्नाधिपतिः, एवं भवति बहुश्रुतः ॥२२॥

जहा से सहस्सक्खे, वज्जपाणी पुरन्दरे ।
सक्के देवाहिवई, एवं हवइ बहुस्सुए ॥२३॥

यथा सहस्राक्षः, वज्रपाणिःपुरंदरः ।
शक्रो देवाधिपतिः, एवं भवति बहुश्रुतः ॥२३॥

जहा से तिमिरविद्धंसे, उत्तिट्ठन्ते दिवायरे ।
जलन्ते इव तेएण, एवं हवइ बहुस्सुए ॥२४॥

यथा स तिमिरध्वंसकः, उत्तिष्ठन् दिवाकरः ।
ज्वलन्निव तेजसा, एवं भवति बहुश्रुतः ॥२४॥

जहा से उडुवई चन्दे, नक्खत्तपरिवारिए ।
पडिपुण्णे पुण्णमासीए, एवं हवइ बहुस्सुए ॥२५॥
यथा स उडुपतिश्चन्द्रः, नक्षत्रपरिवारितः ।
प्रतिपूर्णः पौर्णमास्यां, एवं भवति बहुश्रुतः ॥२५॥

जहा से समाइयाणं, कोट्ठागारे सुरक्खिए ।
नाणाधन्नपडिपुण्णे, एवं हवइ बहुस्सुए ॥२६॥
यथा स सामाजिकानां, कोष्ठागारःसुरक्षितः ।
नानाधान्यप्रतिपूर्णः, एवं भवति बहुश्रुतः ॥२६॥

जहा सा दुमाण पवरा, जम्बू नाम सुदंसणा ।
अणाढियस्स देवस्स, एवं हवइ बहुस्सुए ॥२७॥
यथा सा द्रुमाणां प्रवरा, जम्बूर्नाम सुदर्शना ।
अनादृतस्य देवस्य, एवं भवति बहुश्रुतः ॥२७॥

जहा सा नईण पवरा, सलिला सागरंगमा ।
सीया नीलवन्तपवहा, एवं हवइ बहुस्सुए ॥२८॥
यथा सा नदीनां प्रवरा, सलिला सागरंगमा ।
शीता नीलवत्प्रवहा, एवं भवति बहुश्रुतः ॥२८॥

जहा से नगाण पवरे, सुमहं मन्दरे गिरी ।
नाणोसहिपज्जलिए, एवं हवइ बहुस्सुए ॥२९॥
यथा स नगानां प्रवरः, सुमहान्मन्दरो गिरिः ।
नानौषधिप्रज्वलितः, एवं भवति बहुश्रुतः ॥२९॥

जहा से सयंभुरमणे, उदही अक्खओदए ।
नाणारयणपडिपुण्णे, एवं हवइ बहुस्सुए ॥३०॥

यथा स स्वयंभूरमणः, उदधिरक्षयोदकः।
नानारत्नप्रतिपूर्णः, एवं भवति बहुश्रुतः ॥३०॥

समुद्दगम्भीरसमा दुरासया, अचक्किया केणइ दुप्पहंसया।
सुयस्स पुण्णा विउलस्स ताइणो, खवित्तु कम्मं गइमुत्तमं गया॥३१॥

समुद्रगंभीरसमा दुरासदाः, अचकिताः केनापि दुःप्रधर्षाः।
श्रुतेनपूर्णाः विपुलेनत्रायिणः, क्षपयित्वा कर्मगतिमुत्तमां गताः॥३१॥

तम्हा सुयमहिट्ठिज्जा, उत्तमट्ठगवेसए।
जेणप्पाणं परं चेव, सिद्धिं संपाउणेज्जासि ॥३२॥

तस्माच्छ्रुतमधितिष्ठेत् , उत्तमार्थगवेषकः।
येनात्मानंपरं चैव, सिद्धिं संप्रापयेत् ॥३२॥

॥ त्ति बेमि ॥ इति बहुस्सुयपुज्जं एगारसं अज्झयणं समत्तं ॥११॥
॥ इति ब्रवीमि—इति बहुश्रुतपूजमेकादशमध्ययनं समाप्तं ॥

## ॥ अह हरिएसिज्जं बारहं अज्झयणं ॥

### ॥ अथ हरिकेशीयं द्वादशमध्ययनं ॥

सोवागकुलसंभूओ, गुणुत्तरधरो मुणी।
हरिएसबलो नाम, आसि भिक्खू जिइन्दिओ ॥१॥

श्वपाककुल संभूतः, उत्तरगुणधरो मुनिः।
हरिकेशबलोनाम, आसीद्भिक्षुर्जितेन्द्रियः ॥१॥

इरिएसणभासाए, उच्चारसमिईसु य।
जओ आयाणनिक्खेवे, संजओ सुसमाहिओ ॥२॥

ईर्यैषणाभाषोच्चार समितिषु च।
यत आदाननिक्षेपे, संयतः सुसमाहितः ॥२॥

मणगुत्तो वयगुत्तो, कायगुत्तो जिइन्दिओ।
भिक्खट्ठा बम्भइज्जम्मि, जन्नवाडे उवट्ठिओ ॥३॥

मनोगुप्तो वचोगुप्तः, कायगुप्तोजितेन्द्रियः ।
भिक्षार्थं ब्रह्मेज्ये, यज्ञपाट उपस्थितः ॥३॥

तं पासिऊणं एज्जन्तं, तवेण परिसोसियं ।
पन्तोवहिउवगरणं, उवहसन्ति अणारिया ॥४॥

तं दृष्ट्वाऽऽयान्तं, तपसा परिशोषितम् ।
प्रांतोपध्युपकरणं, उपहसन्त्यनार्याः ॥४॥

जाईमयपडिथद्धा, हिंसगा अजिइन्दिया ।
अवम्भचारिणो वाला, इमं वयणमव्ववी ॥५॥

जातिमदप्रतिस्तब्धाः, हिंसका अजितेन्द्रियाः ।
अब्रह्मचारिणोवालाः, इदं वचनमब्रुवन् ॥५॥

कयरे आगच्छइ दित्तरूवे, काले विकराले फोक्कनासे ।
ओमचेलए पंसुपिसायभूए, संकरदूसं परिहरिय कण्ठे ॥६॥

कतर आगच्छति दीप्तरूपः, कालोविकरालः फोक्कनासः ।
अवमचेलकःपांशुपिशाचभूतः, संकरदूष्यंपरिधृत्यकंठे ॥६॥

कयरे तुमं इय अदंसणिज्जे, काए व आसाइहमागओ सि ।
ओमचेलया पंसुपिसायभूया, गच्छक्खलाहि किमिहं ठिओ सि ।७।

कतरस्त्वमित्यदर्शनीयः, कया वाऽऽशयेहागतोऽसि ।
अवमचेलकपांशुपिशाचभूतः, गच्छाऽपसरकिमिहस्थितोऽसि॥७॥

जक्खे तहिं तिन्दुयरुक्खवासी, अणुकम्पओ तस्स महामुणिस्स ।
पच्छायइत्ता नियगं सरीरं, इमाइं वयणाइमुदाहरित्था ॥८॥

यक्षस्तस्मिन (काले) तिन्दुकवृक्षवासी, अनुकम्पकस्तस्य महामुनेः।
[1]प्रच्छाद्य निजकं शरीरं, इमानि वचनान्युदाहृतवान् ॥८॥

समणो अहं संजओ वम्भयारी, विरओ धणपयणपरिग्गहाओ ।
परप्पवित्तस्स उ भिक्खकाले, अन्नस्स अट्ठा इहमागओ मि ॥९॥

१ तुंनिना शरीरमा प्रवेश करीने.

श्रमणोऽहं संयतो ब्रह्मचारी, विरतो घनपचनपरिग्रहात् ।
परप्रवृतस्य तु भिक्षाकाले, अन्नार्थमिहाऽऽगतोऽस्मि ॥९॥

वियरिज्जइ खज्जइ भुज्जई अन्नं पभूयं भवयाणमेयं ।
जाणाहि मे जायणजीविणु त्ति, सेसावसेसं लभऊ तवस्सी ॥१०॥
वितीर्यते खाद्यते भुज्यते, चान्नं प्रभूतं भवतामेतत् ।
जानीत मां याचनजीविनमिति, शेषावशेषं लभताम् तपस्वी ॥

उवक्खडं भोयण माहणाणं, अत्तट्ठियं सिद्धमिहेगपक्खं ।
न ऊ वयं एरिसमन्नपाणं, दाहामु तुज्झं किमिहं ठिओ सि ॥११॥
उपस्कृतं भोजनं ब्राह्मणानां, आत्मार्थकं सिद्धमिहैकपक्षम् ।
नतुवयमीदृशमन्नपानं, तुभ्यं न दास्यामः किमिहस्थितोऽसि॥११॥

थलेसु बीयाइ ववन्ति कासगा, तहेव निन्ने सु य आससाए ।
एयाए सद्धाए दलाह मज्झं, आराहए पुण्णमिणं खु खित्तं ॥१२॥
स्थलेषु बीजानि वपन्तिकर्षकाः, तथैवनिम्नेषु चाऽऽशंसया ।
एतया श्रद्धया दद्ध्वं मह्यं, आराधयत पुण्यमिदं खलु क्षेत्रम् ॥

खेत्ताणि अम्हं विइयाणि लोए, जहिं पकिण्णा विरुहन्ति पुण्णा ।
जे माहणा जाइविज्जोववेया, ताइं तु खेत्ताइं सुपेसलाइं ॥१३॥
क्षेत्राण्यस्माकं विदितानि लोके, येषु प्रकीर्णानि विरोहन्तिपुण्यानि
ये ब्राह्मणा जातिविद्योपपेताः, तानि तु क्षेत्राणि सुपेशलानि ॥

कोहो य माणो य वहो य जेसिं, मोसं अदत्तं च परिग्गहं च ।
ते माहणा जाइविज्जाविहूणा, ताइं तु खेत्ताइ सुपावयाइं ॥१४॥
क्रोधश्च मानश्च वधश्चयेषां, मृषाऽदत्तं च परिग्रहं च ।
ते ब्राह्मणा जातिविद्याविहीनाः, तानि तु क्षेत्राणि सुपापकानि ॥

तुब्भेत्थ भो भारधरा गिराणं, अट्ठं न जाणेह अहिज्ज वेए ।
उच्चावयाइं मुणिणो चरन्ति, ताइं तु खेत्ताइ सुपेसलाइं ॥१५॥

यूयमत्र भो! भारधरागिरां, अर्थं न जानीथाधीत्य वेदान् ।
उच्चावचानि चरन्तिमुनयः, तानि तु क्षेत्राणि सुपेशलानि॥१५॥

अज्झावयाणं पडिकूलभासी, पभाससे किं तु सगासि अम्हं ।
अवि एयं विणस्सउ अन्नपाणं, न य णं दाहामु तुमं नियण्ठा ॥१६॥

अध्यापकानां प्रतिकूलभाषिन्, प्रभाषसे कि तु सकाशेऽस्माकम् ।
अप्येतद्विनश्यत्वन्नपाणं, न च तद्दास्यामस्तुभ्यं निर्ग्रन्थ? ॥१६॥

समिईहि मज्झं सुसमाहियस्स, गुत्तीहि गुत्तस्स जिइन्दियस्स ।
जइ मे न दाहित्थ अहेसणिज्जं, किमज्ज जन्नाण लहित्थ लाहं ॥१७॥

समितिभिर्मह्यं सुसमाहिताय, गुप्तिभिर्गुप्ताय जितेन्द्रियाय ।
यदिर्मह्यं न दास्यथाऽथैषणीयं,किमद्य यज्ञानां लप्स्यध्वे लाभम्।१७।

के इत्थ खत्ता उवजोइया वा, अज्झावया वा सह खण्डिएहिं ।
एयं खु दण्डेण फलएण हन्ता, कण्ठम्मि घेत्तूण खलेज्ज जो णं॥१८॥

केऽत्र क्षत्रा उपज्योतिषा वा, अध्यापका वा सह [1]खण्डिकैः ।
एनं तु दण्डेन फलकेन हत्वा, कंठं गृहीत्वा निष्कारयेयुःये॥१८॥

अज्झावयाणं वयणं सुणेत्ता, उद्धाइया तत्थ बहू कुमारा ।
दण्डेहिं वित्तेहिं कसेहि चेव, समागया तं इसि तालयन्ति ॥१९॥

अध्यापकानां वचनं श्रुत्वा, उद्धावितास्तत्रबहवःकुमाराः ।
दण्डैर्वैत्रैःकशैश्चैव, समागतास्तमृषि ताडयन्ति ॥१९॥

रन्नो तहिं कोसलियस्स धूया, भद्द त्ति नामेण अणिन्दियंगी ।
तं पासिया संजय हम्माणं, कुद्धे कुमारे परिनिव्ववेइ ॥२०॥

राज्ञस्तत्र कौशलिकस्य दुहिता, भद्रेतिनाम्नाऽनिदितांगी ।
तं दृष्ट्वा संयतं हन्यमानं, क्रुद्धान्कुमारान्परिनिर्वापयति ॥२०॥

देवाभिओगेण निओइएणं, दिन्नामु रन्ना मणसा न झाया ।
नरिन्ददेविन्दभिवन्दिएणं, जेणामि वंता इसिणा स एसो ॥२१॥

[1] विद्यार्थीओ साथे.

देवाभियोगेन नियोजितेन, दत्ताऽस्मि राज्ञा मनसा न ध्याता ।
नरेन्द्रदेवेन्द्राभिवन्दितेन, येनास्मि वान्ता ऋषिणा स एषः॥२१॥

एसो हु सो उग्गतवो महप्पा, जितिन्दिओ संजओ बम्भयारी ।
जो मे तया नेच्छइ दिज्जमाणिं, पिउणा सयं कोसलिएण रन्ना॥२२॥

एष खलु स उग्रतपा महात्मा, जितेन्द्रियःसंयतो ब्रह्मचारी ।
यो मां तदा नेच्छति दीयमानां, पित्रास्वयं कौशलिकेन राज्ञा॥२२॥

महाजसो एस महाणुभागो, घोरव्वओ घोरपरक्कमो य ।
मा एयं हीलेह अहीलणिज्जं, मा सव्वे तेएण भे निद्दहेज्जा॥२३॥

महायशा एष महानुभागः, घोरव्रतो घोरपराक्रमश्च ।
मैनं हीलयताहीलनीयं, मा सर्वान्तेजसा भवतो निर्धाक्षीत् २३॥

एयाइं तीसे वयणाइं सोच्चा, पत्तीइ भद्दाइ सुभासियाइं ।
इसिस्स वेयावडियट्ठयाए, जक्खा कुमारे विणिवारयन्ति ॥२४॥

एतानि तस्यावचनानि श्रुत्वा, पत्न्या भद्रायाःसुभाषितानि ।
ऋषेर्वैयावृत्यर्थ, यक्षाः कुमारान् विनिवारयन्ति ॥२४॥

ते घोररूवा ठिय अन्तलिक्खेऽसुरा तहिं तं जण तालयन्ति ।
ते भिन्नदेहे रुहिरं वमन्ते, पासित्तु भद्दा इणमाहु भुज्जो ॥२५॥

ते घोररूपाः स्थिता अन्तरिक्षे, असुरास्तत्र त जनं ताडयन्ति ।
तान् भिन्नदेहान्रुधिरं वमतः, दृष्ट्वा भद्रेदमाह भूयः ॥२५॥

गिरिं नहेहिं खणह, अयं दन्तेहिं खायह ।
जायतेय पाएहिं हणह, जे भिक्खुं अवमन्नह ॥२६॥

गिरि नखैः खनथ, अयो दंतैः खादथ ।
जाततेजसं पादैर्हथ, ये भिक्षुमवमन्यथ ॥२६॥

आसीविसो उग्गतवो महेसी, घोरव्वओ घोरपरक्कमो य ।
अगणिं व पक्खन्द पयंगसेणा, जे भिक्खुयं भत्तकाले वहेह ॥२७॥

आशीर्विष उग्रतपा महर्षिः, घोरव्रतो घोरपराक्रमश्च ।
अग्निमिव प्रस्कन्दथ पतंगसेना, ये भिक्षुकं भक्तकाले विध्यथ॥२७॥

सीसेण एयं सरणं उवेह, समागया सव्वजणेण तुब्भे ।
जइ इच्छह जीवियं वा धणं वा, लोगंपि एसो कुविओ डहेज्जा॥२८॥
शीर्षेणैनंशरणमुपेत, समागताः सर्वजनेन यूयम् ।
यदीच्छथ जीवितं वा धनं वा, लोकमप्येष कुपितो दहेत्॥२८॥

अवहेडियपिट्ठिसउत्तमंगे, पसारिया बाहु अकम्मचिट्ठे ।
निब्भेरियच्छे रुहिरं वमन्ते, उड्ढंमुहे निग्गयजीहनेत्ते ॥२९॥
अवहेठितपृष्ठसदुत्तमांगान् , प्रसारितबाहूनकर्मचेष्टान् ।
प्रसारिताक्षान् रुधिरं वमतः, उर्ध्वमुखान्निर्गतजिह्वानेत्रान् ॥२९॥

ते पासिया खण्डिय कट्ठभूए, विमणो विसण्णो अह माहणो सो ।
इसिं पसाएइ सभारियाओ, हीलं च निन्दं च खमाह भन्ते! ॥३०॥
तान्दृष्ट्वा खण्डिकान्काष्ठभूतान्, विमना विषण्णोऽथ ब्राह्मणः सः।
ऋषिं प्रसादयति सभार्याकः, हीलां च निन्दां च क्षमध्वं भदन्त! ॥

बालेहि मूढेहि अयाणएहिं, जं हीलिया तस्स खमाह भन्ते ।
महप्पसाया इसिणो हवन्ति, न हु मुणी कोवपरा हवन्ति ॥३१॥
बालैर्मूढैरज्ञैः यद् हीलितास्तत्क्षमध्वम् भदन्त ! ।
महाप्रसादा ऋषयो भवन्ति, न खलु मुनयः कोपपरा भवन्ति॥३१॥

पुव्विं च इण्हिं च अणागयं च, मणप्पदोसो न मे अत्थि कोइ ।
जक्खा हु वेयावडियं करेन्ति, तम्हा हु एए निहया कुमारा ॥३२॥
पूर्वं चेदानीं चानागतं च, मनःप्रद्वेषो न मेऽस्ति कोऽपि ।
यक्षाः खलु वैयावृत्त्यं कुर्वन्ति,तस्मात्खल्वेते निहताःकुमाराः॥३२॥

अत्थं च धम्मं च वियाणमाणा, तुब्भं न वि कुप्पह भूइपन्ना ।
तुब्भं तु पाए सरणं उवेमो, समागया सव्वजणेण अम्हे ॥३३॥

अर्थं च धर्मं च विजानानाः, यूयं नापि कुप्यथ भूतिप्रज्ञाः ।
युष्माकं तु पादौ शरणमुपेमः, समागताः सर्वजनेन वयम् ॥३३

अच्चेमु ते महाभाग, न ते किंचि न अच्चिमो ।
भुंजाहि सालिमं कूरं, नाणावंजणसंजुयं ॥३४॥
अर्चयामस्त्वां महाभाग, न तव किंचिन्नार्चयामः ।
भुंक्ष्व शालिमयं [1]कूरं, [2]नानाव्यञ्जनसंयुतम् ॥३४॥

इमं च मे अत्थि पभूयमन्नं, तं भुंजसू अम्ह अणुग्गहट्ठा ।
बाढं ति पडिच्छइ भत्तपाणं, मासस्स ऊ पारणए महप्पा ॥३५॥
इदं च मेऽस्ति प्रभूतमन्नं, तद् भुंक्ष्वास्माकमनुग्रहार्थम् ।
बाढमिति प्रतीच्छति भक्तपानं, मासस्य तु पारणके महात्मा॥३५॥

तहियं गन्धोदयपुप्फवासं, दिव्वा तहिं वसुहारा य वुट्ठा ।
पहयाओ दुन्दुहीओ सुरेहिं, आगासे अहो दाणं च घुट्ठं ॥३६॥
तत्र गंधोदकपुष्पवर्षं, दीव्या तत्रवसुधारा च वृष्टा ।
प्रहता दुन्दुभयः सुरैः, आकाशेऽहो दानं च घुष्टं ॥३६॥

सक्खं खु दीसइ तवोविसेसो, न दीसई जाइविसेसु कोई ।
सोवागपुत्तं हरिएससाहुं, जस्सेरिसा इड्ढि महाणुभागा ॥३७॥
साक्षात्खलु दृश्यते तपोविशेषः, न दृश्यते जातिविशेषःकोऽपि ।
श्वपाकपुत्रं हरिकेशसाधुं, यस्येदृशी ऋद्धिर्महानुभागा ॥३७॥

किं माहणा जोईसमारभन्ता, उदएण सोहिं बहिया विमग्गहा ।
जं मग्गहा बाहिरियं विसोहिं, न तं सुइट्ठं कुसला वयन्ति ॥३८॥
किं ब्राह्मणा ज्योतिःसमारभमाणाः,उदकेन शुद्धि बाह्यां विमार्गयथ ।
यां मार्गयथ बाह्यां विशुद्धिं, न तत [3]स्विष्टं कुशला वदन्ति ३८॥

कुसं च जूवं तणकट्ठमग्गिं, सायं च पायं उदगं फुसन्ता ।
पाणाइ भूयाइ विहेडयन्ता, भुज्जो वि मन्दा पकरेह पावं ॥३९॥

---

१ राधेला चोखा. २ राइता वगैरे सहित. ३ योग्य.

कुशं च यूपं तृणकाष्टमग्निं, सायं च प्रातरुदकं स्पृशन्तः ।
प्राणिनो भूतान् [1]विहेठमानाः,भूयोऽपि मन्दाःप्रकुरुथ पापम्३९॥

कहं चरे भिक्खु वयं जयामो, पावाइ कम्माइ पुणोल्लयामो ।
अक्खाहि णे संजय जक्खपूइया, कहं सुइट्ठं कुसला वयन्ति ॥४०॥
कथं चरामो भिक्षो वयं यजामः पापानि कर्माणि पुनः प्रणुदामः ।
आख्याहि नः संयत! यक्षपूजित!कथं स्विष्टं कुशला वदन्ति॥४०॥
छज्जीवकाए असमारभन्ता, मोसं अदत्तं च असेवमाणा ।
परिग्गहं इत्थिओ माण मायं, एयं परिन्नाय चरन्ति दन्ता॥४१॥
षड्जीवकायानसमारभमाणाः, मृषाऽदत्तं चासेवमानाः ।
परिग्रहं स्त्रियो मानं मायां, एतत्परिज्ञाय चरन्ति दान्ताः॥४१॥
सुसंवुडा पंचहिं संवरेहिं, इह जीवियं अणवकंखमाणा ।
वोसट्ठकाया सुइचत्तदेहा, महाजयं जयइ जन्नसिट्ठं ॥४२॥
सुसंवृताः पंचभिः संवरैः, इह जीवितमनवकांक्षतः ।
व्युत्सृष्टकायाः शुचित्यक्तदेहाः, महाजयं यजन्ते श्रेष्ठयज्ञं॥४२॥
के ते जोई के व ते जोइठाणे, का ते सुया किं व ते कारिसंगं ।
एहा य ते कयरा सन्ति भिक्खू, कयरेण होमेण हुणासि जोइं ।४३।
कि ते ज्योतिः कि वा ते ज्योतिःस्थानं,कास्ते [2]स्रुचः किंते [3]करीषांगम्
एधाश्च ते कतराः शान्तिभिक्षो, कतरेण होमेन जुहोषि ज्योतिः
तवो जोई जीवो जोइठाणं, जोगा सुया सरीरं कारिसंगं ।
कम्मेहा संजमजोगसन्ती, होमं हुणामि इसिणं पसत्थं ॥४४॥
तपो ज्योतिर्जीवो ज्योतिःस्थानं, योगाः स्रुचः शरीरं करीषांगम् ।
कर्मैधाः संयमयोगाः शान्तिः, [4]होमेन जुहोम्यृषीणां प्रशस्तेन।४४।
के ते हरए के य ते सन्तितित्थे, कहिं सिणाओ व रयं जहासि ।
आइक्ख णे संजय जक्खपूइया, इच्छामो नाउं भवओ सगासे॥४५॥

१ नाना जीवोने दुख आपता छतां. २ कडछी. ३ अग्निने प्रदीपन करनार.
४ चारित्ररूप यज्ञवडे.

कस्ते ह्रदः किंच ते शान्तितीर्थं, कस्मिन् स्नातो वा रजो जहासि ।
आख्याहि नः संयत यक्षपूजित! इच्छामो ज्ञातुं भवतः सकाशे ॥
धम्मे हरए बम्भे सन्तितित्थे, अणाविले अत्तपसन्नलेसे ।
जहिं सिणाओ विमलो विसुद्धो, सुसीइभूओ पजहामि दोसं ।४६।
धर्मो ह्रदो ब्रह्म शान्तितीर्थं, अनाविल आत्मप्रसन्नलेश्ये ।
यस्मिन् स्नातो विमलो विशुद्धः, सुशीतीभूतः प्रजहामि दोषम् ॥
एयं सिणाणं कुसलेहि दिट्ठं, महासिणाणं इसिणं पसत्थं ।
जहिं सिणाया विमला विसुद्धा, महारिसी उत्तमं ठाणं पत्ते ॥४७॥
एतत्स्नानं कुशलैर्दृष्टं, महास्नानमृषीणां प्रशस्तम् ।
यस्मिन्स्नाता विमला विशुद्धाः, महर्षय उत्तमं स्थानं प्राप्ताः ॥४७॥

॥ त्ति बेमि ॥ इति हरिएसिज्जं अज्झयणं समत्तं ॥१२॥
इति ब्रवीमि—इति हरिकेशीयमध्ययनं समाप्तं ॥

## ॥ अह चित्तसम्भूइज्जं तेरहमं अज्झयणं ॥

॥ अथ चित्तसंभूतीयं त्रयोदशमध्ययनं ॥

जाईपराजिओ खलु, कासि नियाणं तु हत्थिणपुरम्मि ।
चुलणीए बम्भदत्तो, उववन्नो पउमगुम्माओ ॥१॥
जातिपराजितः खलु, अकार्षीत् निदानं तु हस्तिनापुरे ।
चुलन्यां ब्रह्मदत्तः, उपपन्नः पद्मगुल्मात् ॥१॥
कम्पिल्ले सम्भूओ, चित्तो पुण जाओ पुरिमतालम्मि ।
सेट्ठिकुलम्मि विसाले, धम्मं सोऊण पव्वइओ ॥२॥
कांपील्ये संभूतः, चित्तः पुनर्जातः पुरिमताले ।
श्रेष्ठिकुले विशाले, धर्मं श्रुत्वा प्रव्रजितः ॥२॥
कम्पिल्लम्मि य नगरे, समागया दो वि चित्तसम्भूया ।
सुहदुक्खफलविवागं, कहेन्ति ते एक्कमेक्कस्स ॥३॥

कांपील्ये च नगरे, समागतौ द्वावपि चित्तसंभूतौ।
सुखदुःखफलविपाकं, कथयतस्तावेकैकस्य ॥३॥
चक्कवट्टी महिड्ढीओ, बम्भदत्तो महायसो।
भायरं बहुमाणेणं, इमं वयणमब्बवी ॥४॥
चक्रवर्ती महर्द्धिकः, ब्रह्मदत्तो महायशाः।
भ्रातरं बहुमानेन, इदं वचनमब्रवीत् ॥४॥
आसीमो भायरा दोवि, अन्नमन्नवसाणुगा।
अन्नमन्नमणुरत्ता, अन्नमन्नहिएसिणो ॥५॥
आस्व भ्रातरौ द्वावपि, अन्योऽन्यवशानुगौ।
अन्योऽन्यमनुरक्तौ, अन्योऽन्यं हितैषिणौ. ॥५॥
दासा दसण्णे आसी, मिया कालिंजरे नगे।
हंसा मयंगतीराए, सोवागा कासिभूमिए ॥६॥
दासौ दशार्णेषु आस्व, मृगौ कालिंजरे नगे।
हंसौ मृतगंगातीरे, श्वपाकौ काशीभूम्याम् ॥६॥
देवा य देवलोगम्मि, आसि अम्हे महिड्ढिया।
इमा णो छट्ठिया जाई, अन्नमन्नेण जा विणा ॥७॥
देवौ च देवलोके, आस्वाऽऽवां महर्द्धिकौ।
इयमावयोः षष्ठिका जातिः अन्योऽन्येन या विना। ॥७॥
कम्मा नियाणपगडा, तुमे राय! विचिन्तिया।
तेसिं फलविवागेण, विप्पओगमुवागया ॥८॥
कर्माणि निदानप्रकृतानि, त्वया राजन् विचिन्तितानि।
तेषां फलविपाकेन, विप्रयोगमुपागतौ ॥८॥
सच्चसोयप्पगडा, कम्मा मए पुरा कडा।
ते अज्ज परिभुंजामो, किं नु चित्तेवि से तहा ॥९॥

१ परस्पर साथ वरतती.

सत्यशौचप्रकटानि, कर्माणि मया पुराकृतानि ।
तान्यद्य परिभुञ्जे, किन्नु चित्तोऽपि तानि तथा ॥९॥

सव्वं सुचिण्णं सफलं नराणं, कडाण कम्माण न मोक्ख अत्थि ।
अत्थेहि कामेहि य उत्तमेहिं, आया ममं पुण्णफलोववेए ॥१०॥
सर्वं सुचीर्णं सफलं नराणां, कृतेभ्यःकर्मभ्यो न मोक्षोऽस्ति ।
अर्थैः कामैश्चोत्तमैः आत्मा मम पुण्यफलोपपेतः ॥१०॥

जाणासि संभूय महाणुभागं, महिड्डियं पुण्णफलोववेयं ।
चित्तं पि जाणाहि तहेव रायं, इड्डी जुई तस्सावि य प्पभूया॥११॥
जानासि संभूत ? महानुभागं, महर्द्धिकं पुण्यफलोपपेतम् ।
चित्रमपि जानीहि तथैव राजन्, ऋद्धिर्द्युतिस्तस्यापि च प्रभूता ॥

महत्थरूवा वयणप्पभूया, गाहाणुगीया नरसंघमज्झे ।
जं भिक्खुणो सीलगुणोववेया, इह जयन्ते समणोमि जाओ ॥
महार्थरूपा वचनाऽल्पभूता, गाथानुगीता नरसंघमध्ये ।
यां(श्रुत्वा) भिक्षवःशीलगुणोपपेताः इह यतन्ते श्रमणोस्मि जातः॥

उच्चोअए महु कक्के य बम्भे, पवेइया आवसहा य रम्मा ।
इमं गिहं चित्तधणप्पभूयं, पसाहि पंचालगुणोववेयं ॥१३॥
[1]उच्चोदयो मधुः कर्कश्च ब्रह्मा, प्रवेदिता आवसथाश्चरम्या ।
इदं गृहं प्रभूतचित्रधनं, प्रशाधि पंचालगुणोपपेतम् ॥१३॥

नट्टेहिं गीएहिं य वाइएहिं, नारीजणाहिं परिवारयन्तो ।
भुंजाहि भोगाइ इमाइ भिक्खू, मम रोयई पव्वज्जा हु दुक्खं ॥१४॥
नृत्यैर्गीतैश्च वादित्रैः, नारीजनान् परिवारयन् ।
भुंक्ष्व भोगानिमान् भिक्षो, मह्यं रोचते प्रव्रज्या खलु दुःखम्॥१४॥

तं पुव्वनेहेण कयाणुरागं, नराहिवं कामगुणेसु गिद्धं ।
धम्मस्सिओ तस्स हियाणुपेही, चित्तो इमं वयणमुदाहरित्था ॥

१ उच्च, उदय विगेरे नामना पाच महेलो छे.

तं पूर्वस्नेहेन कृतानुरागं, नराधिपं कामगुणेषु गृद्धम् ।
धर्माश्रितस्तस्य हितानुप्रेक्षी, चित्त इदं वचनमुदाहृतवान् ॥१५॥
सव्वं विलवियं गीयं, सव्वं नट्टं विडम्बियं ।
सव्वे आभरणा भारा, सव्वे कामा दुहावहा ॥१६॥
सर्वं विलपितं गीतं, सर्वं नृत्यं विडम्बितम् ।
सर्वाण्याभरणानि भाराः, सर्वे कामा दुःखावहाः ॥१६॥
बालाभिरामेसु दुहावहेसु, न तं सुहं कामगुणेसु रायं ।
विरत्तकामाण तवोधणाणं, जं भिक्खुणं सीलगुणे रयाणं ॥१७॥
बालाभिरामेषु दुःखावहेषु, न तत्सुखं कामगुणेषु राजन् ।
विरक्तकामानां तपोधनानां, यद्भिक्षूणां शीलगुणेषु रतानाम् ॥१७॥
नरिंद जाई अहमा नराणं, सोवागजाई दुहओ गयाणं ।
जहिं वयं सव्वजणस्स वेस्सा, वसीअ सोवागनिवेसणेसु ॥१८॥
नरेन्द्र जातिरधमा नराणां, श्वपाकजातिर्द्वयो गतयोः ।
यस्यामावाम् सर्वजनस्य द्वेष्यौ, अवसाव श्वपाकनिवेशनेषु ॥१८॥
तीसे य जाईइ उ पावियाए, वुच्छामु सोवागनिवेसणेसु ।
सव्वस्स लोगस्स दुगंछणिज्जा, इहं तु कम्माइ पुरे कडाइं ॥१९॥
तस्यां च जातौ तु पापिकायां, उषितौस्वःश्वपाकनिवेशनेषु ।
सर्वस्य लोकस्य जुगुप्सनीयौ, [1]अस्मिंस्तु कर्माणि पुराकृतानि ॥१९॥
सो दाणिसिं राय महाणुभागो, महिड्ढिओ पुण्णफलोववेओ ।
चइत्तु भोगाइ असासयाइं, आदाणहेउं अभिणिक्खमाहि ॥२०॥
स इदानीं राजन् महानुभागः, महर्धिकः पुण्यफलोपपेतः ।
त्यक्त्वा भोगानशाश्वतान्, आदानहेतोरभिनिःक्राम ॥२०॥
इह जीविए राय असासयम्मि, धणियं तु पुण्णाइं अकुव्वमाणो ।
से सोयई मच्चुमुहोवणीए, धम्मं अकाऊण परंमि लोए ॥२१॥

1 आलोकमां

इह जीविते राजन्नशाश्वते, [1]धनितं तु पुण्यान्यकुर्वाणः ।
स शोचति मृत्युमुखोपनीतः, धर्ममकृत्वा परस्मिँल्लोके ॥२१॥

जहेह सीहो व मियं गहाय, मच्चू नरं नेइ हु अन्तकाले ।
न तस्स माया व पिया व भाया, कालम्मि तम्मंसहरा भवन्ति॥२२॥

यथेह सिंहोवा मृगं गृहीत्वा, मृत्युर्नरं नयति खल्वन्तकाले ।
न तस्य माता वा पिता च भ्राता, काले तस्यांशधरा भवन्ति॥२२॥

न तस्स दुक्खं विभयन्ति नाइओ, न मित्तवग्गा न सुया न बंधवा।
एक्को सयं पच्चणुहोइ दुक्खं, कत्तारमेव अणुजाइ कम्मं ॥२३॥

न तस्य दुःखंविभजन्ते ज्ञातयः, न मित्रवर्गा न सुता न बान्धवाः।
एकः स्वयं प्रत्यनुभवति दुःखं, कर्तारमेवानुयाति कर्म ॥२३॥

चिच्चा दुपयं च चउप्पयं च, खेत्तं गिहं धणधन्नं च सव्वं ।
सकम्मबीओ अवसो पयाइ, परं भवं सुंदर पावगं वा ॥२४॥

त्यक्त्वा द्विपदं च चतुष्पदं च, क्षेत्रं गृहं धनं धान्यं च सर्वम् ।
स्वकर्मद्वितीयोऽवशः प्रयाति, परभवं सुन्दरं पापकं वा ॥२४॥

तं एक्कगं तुच्छसरीरगं से, चिईगयं दहिय उ पावगेणं ।
भज्जा य पुत्तोवि य नायओ वा, दायारमन्नं अणुसंकमन्ति॥२५॥

तदेककं तुच्छशरीरकं तस्य, चितिगतं दग्ध्वा तु पावकेन ।
भार्या च पुत्रोऽपि च ज्ञातयो वा, दातारमन्यमनुसंक्रामन्ति॥२५॥

उवणिज्जई जीवियमप्पमायं, वण्णं जरा हरइ नरस्स राय ।
पंचालराया वयणं सुणाहि, मा कासि कम्माइ महालयाइं ॥२६॥

उपनीयते जीवितमप्रमादं, वर्णं जरा हरति नरस्य राजन् ।
पंचालराज ! वचनं शृणु, मा कार्षीः कर्माणि [2]महालयानि॥२६॥

अहं पि जाणामि जहेह साहू, जं मे तुमं साहसि वक्कमेयं ।
भोगा इमे संगकरा हवंति, जे दुज्जया अज्जो अम्हारिसेहिं ॥२७॥

1 अत्यंत. २ पचेंद्रिय वध जेवा.

अहमपि जानामि यथेह साधो, यन्मम त्वं साधयसि वाक्यमेतत्।
भोगा इमे संगकरा भवन्ति, ये दुर्जया आर्य! अस्मादृशैः॥२७॥

हत्थिणपुरम्मि चित्ता, दट्ठूणं नरवइं महिड्ढीयं।
कामभोगेसु गिद्धेणं, नियाणमसुहं कडं ॥२८॥

हस्तिनापुरे चित्र ! दृष्ट्वा नरपतिं महर्द्धिकम्।
कामभोगेषु गृध्येन, निदानमशुभं कृतम् ॥२८॥

तस्स मे अपडिकन्तस्स, इमं एयारिसं फलं।
जाणमाणो वि जं धम्मं, कामभोगेसु मुच्छिओ ॥२९॥

तस्मान्ममाप्रतिक्रान्तस्य, इदमेतादृशं फलम्।
जानानोऽपि यद्धर्मं, कामभोगेषु मूर्च्छितः ॥२९॥

नागो जहा पंकजलावसन्नो, दट्ठुं थलं नाभिसमेइ तीरं।
एवं वयं कामगुणेसु गिद्धा, न भिक्खुणो मग्गमणुव्वयामो ॥३०॥

नागो यथा पंकजलावसन्नः, दृष्ट्वा स्थलं नाभिसमेतितीरम्।
एवं वयं कामगुणेषु गृद्धाः, नो भिक्षोर्मार्गमनुव्रजामः ॥३०॥

अच्चेइ कालो तरन्ति राइओ, न यावि भोगा पुरिसाण निच्चा।
उविच्च भोगा पुरिसं चयन्ति, दुमं जहा खीणफलं व पक्खी ॥३१॥

अत्येति कालस्त्वरन्ते रात्रयः, न चापिभोगाः पुरुषाणां नित्याः
उपेत्य भोगाःपुरुषं त्यजन्ति, द्रुमं यथा क्षीणफलमिव पक्षिणः ३१॥

जइ तं सि भोगे चइउं असत्तो, अज्जाइं कम्माइं करेहि रायं।
धम्मे ठिओ सव्वपयाणुकम्पी, तो होहिसि देवो इओ विउव्वी ॥३२॥

यदि त्वमसि भोगान्त्यक्तुमशक्तः, आर्याणि कर्माणि कुरुष्व राजन्।
धर्मे स्थितःसर्वप्रजानुकंपी, तस्माद् भविष्यसि देवइतोवैक्रेयी३२॥

न तुज्झ भोगे चइऊण बुद्धी, गिद्धोसि आरम्भपरिग्गहेसु।
मोहं कओ एत्तिउ विप्पलावो, गच्छामि रायं आमन्तिओ सि ॥३३॥

न तव भोगान् त्यक्तुं बुद्धिः, गृद्धोऽस्यारंभपरिग्रहेषु।
मोघं कृत एतावान्विप्रलापः, गच्छामि राजन्नामंत्रितोऽसि॥३३॥
पंचालरायावि य बम्भदत्तो, साहुस्स तस्स वयणं अकाउं।
अणुत्तरे भुंजिय कामभोगे, अणुत्तरे सो नरए पविट्ठो ॥३४॥
पंचालराजोंऽपि च ब्रह्मदत्तः, साधोस्तस्य वचनमकृत्वा।
अनुत्तरान् भुक्त्वा कामभोगान्, अनुत्तरे स नरके प्रविष्टः॥३४॥
चित्तो वि कामेहि विरत्तकामो, उदग्गचारित्ततवो महेसी।
अणुत्तरं संजम पालइत्ता, अणुत्तरं सिद्धिगइं गओ ॥३५॥
चित्रोऽपि कामेभ्यो विरक्तकामः, उदग्रचारित्रतपा महर्षिः।
अनुत्तरं संयमं पालयित्वा, अनुत्तरां सिध्धिगतिगतः ॥५॥
॥ त्ति बेमि ॥ इति चित्तसम्भूइज्जं तेरहमं अज्झयणं समत्तं॥१३॥
इतिब्रवीमि–इति चित्रसंभूतीयं त्रयोदशमध्ययनं समाप्तं॥

## ॥ अह उसुयारिज्जं चोदहमं अज्झयणं ॥

### ॥ अथेषुकारीयं चतुर्दशमध्ययनं ॥

देवा भवित्ताण पुरे भवम्मि, केई चुया एगविमाणवासी।
पुरे पुराणे उसुयारनामे, खाए समिद्धे सुरलोगरम्मे ॥१॥
देवा भूत्वा पूर्वे भवे, केचिच्च्युता एकविमानवासिनः।
पुरे पुराण इषुकारनाम्नि, ख्याते समृध्धे सुरलोकरम्ये ॥१॥
सकम्मसेसेण पुराकएणं, कुलेसुदग्गेसु य ते पसूया।
निव्विण्णसंसारभया जहाय, जिणिंदमग्गं सरणं पवन्ना ॥२॥
स्वकर्मशेषेण पुराकृतेन, कुलेषूदग्रेषु च ते प्रसूताः।
निर्विण्णाःसंसारभयात्त्यक्त्वा(संसारं), जिनेन्द्रमार्गं शरणं प्रपन्नाः॥
पुमत्तमागम्म कुमार दो वी, पुरोहिओ तस्स जसा य पत्ती।
विसालकित्ती य तहेसुयारो, रायत्थ देवी कमलावई य ॥३॥

पुंस्त्वमाऽऽगम्य कुमारौ द्वावपि, पुरोहितः(च)तस्य यशा च पत्नी
विशालकीर्तिश्चतथेषुकारः,राजात्र देवी कमलावती च ॥३॥

जाईजरामच्चुभयाभिभूया, वहिंविहाराभिनिविट्ठचित्ता ।
संसारचक्कस्स विमोक्खणट्ठा, दट्ठूण ते कामगुणे विरत्ता ॥४॥

जातिजरामृत्युभयाभिभूतौं, वहिर्विहाराभिनिविष्ट चित्तौ ।
संसारचक्रस्य विमोक्षार्थं,दृष्ट्वा (साधुं)तौ कामगुणेभ्यो विरक्तौ॥४॥

पियपुत्तगा दोन्नि वि माहणस्स, सकम्मसीलस्स पुरोहियस्स ।
सरित्तु पोराणिय तत्थ जाइं, तहा सुचिण्णं तवसंजमं च ॥५॥

प्रियपुत्रकौ द्वावपि ब्राह्मणस्य, स्वकर्मशीलस्य पुरोहितस्य ।
स्मृत्वा पौराणिकी तत्रजाति, तथा सुचीर्णं तपः संयमं च ॥५॥

ते कामभोगेसु असज्जमाणा, माणुस्सएसुं जे यावि दिव्वा ।
मोक्खाभिकंखी अभिजायसड्ढा, तातं उवागम्म इमं उदाहु ॥६॥

तौ कामभोगेष्वसजन्तौ, मानुष्यकेषु ये चापि दिव्याः(तेषु) ।
मोक्षाभिकाङ्क्षिणावभिजातश्रद्धौ,तातमुपागम्येदमुदाहरताम्॥६॥

असासयं दट्ठु इमं विहारं, वहुअन्तरायं न य दीहमाउं ।
तम्हा गिहंसि न रइं लभामो, आमन्तयामो चरिस्सामु मोणं ॥७॥

अशाश्वतं दृष्ट्वेमं विहारं, वहून्तरायं न च दीर्घमायुः ।
तस्माद्गृहे न रतिं लभावहे, आमंत्रयावश्चरिष्यावो मौनम् ॥७॥

अह तायगो तत्थ मुणीण तेसिं, तवस्स वाघायकरं वयासी ।
इमं वयं वेयविओ वयन्ति, जहा न होई असुयाण लोगो ॥८॥

अथ तातकस्तत्र मुन्योस्तयोः, तपसो व्याघातकरमवादीत् ।
इमां वाचं वेदविदो वदन्ति, यथा न भवत्यसुतानां लोकः॥८॥

अहिज्ज वेए परिविस्स विप्पे, पुत्ते परिट्ठप्प गिहंसि जाया ।
भोच्चाण भोए सह इत्थियाहिं, आरण्णगा होह मुणी पसत्था ॥९॥

अधीत्य वेदान्परिवेष्य विप्रान् , पुत्रान्परिष्ठाप्य गृहे जातौ।
भुक्त्वा भोगान् सह स्त्रीभिः, आरण्यकौ भवतं मुनी-प्रशस्तौ ॥

सोयग्गिणा आयगुणिन्धणेणं, मोहाणिला पज्जलणाहिएणं ।
संतत्तभावं परितप्पमाणं, लालप्पमाणं बहुहा बहुं च ॥१०॥

शोकाग्निनाऽऽत्मगुणेन्धनेन, मोहानिलादधिकप्रज्वलनेन ।
संतप्तभावं परितप्यमानं, लालप्यमानं बहुधा बहु च ॥१०॥

पुरोहियं तं कमसोऽणुणन्तं, निमंतयन्तं च सुए धणेणं
जहक्कमं कामगुणेहिं चेव, कुमारगा ते पसमिक्ख वक्कं ॥११॥

पुरोहितं तं क्रमशोऽनुनयन्तं, निमंत्रयन्तं च सुतौ धनेन ।
यथाक्रमं कामगुणैश्चैव, कुमारकौ तौ प्रसमीक्ष्य वाक्यम् ॥११॥

वेया अहीया न भवन्ति ताणं, भुत्ता दिया निन्ति तमं तमेणं ।
जाया य पुत्ता न हवन्ति ताणं, को णाम ते अणुमन्नेज्ज एयं ॥१२॥

वेदा अधीता न भवन्ति त्राणं,भोजिता द्विजा नयन्ति [1]तमस्तमसि
जाताश्च पुत्रा न भवन्ति त्राणं, को(पुरुषः)नाम तवानुमन्येतैतत् ॥

खणमित्तसुक्खा बहुकालदुक्खा, पगामदुक्खा अणिगामसुक्खा ।
संसारमोक्खस्स विपक्खभूया, खाणी अणत्थाण उ कामभोगा॥१३॥

क्षणमात्रसौख्या बहुकालदुःखाः, प्रकामदुःखा अनिकामसौख्याः ।
संसारमोक्षस्य विपक्षभूताः, खानिरनर्थानां तु कामभोगाः ॥१३॥

परिव्वयन्ते अणियत्तकामे, अहो य राओ परितप्पमाणे ।
अन्नप्पमत्ते धणमेसमाणे, पप्पोति मच्चुं पुरिसे जरं च ॥१४॥

परिव्रजन्ननिवृत्तकामः, अह्नि च रात्रौ परितप्यमानः ।
[2]अन्यप्रमत्तो धनमेषयन् , प्राप्नोति मृत्युं पुरुषो जरां च ॥१४॥

इमं च मे अत्थि इमं च नत्थि, मिमं च मे किच्च मिमं अकिच्चं ।
तं एवमेवं लालप्पमाणं, हरा हरंति त्ति कहं पमाओ? ॥१५॥

---

१ सातमी नरकमां. २ बीजा माटे दूषित प्रवृत्ति करनार.

इदं च मेऽस्ति इदंच नास्ति, इदं च मे कृत्यमिदमकृत्यम् ।
तमेवमेवं लालप्यमानं, हरा हरन्तीतिकथं प्रमादः ॥१५॥

धणं पभूयं सह इत्थियाहिं, सयणा तहा कामगुणा पगामा ।
तवं कए तप्पइ जस्स लोगो, तं सव्व साहीणमिहेव तुब्भं ॥१६॥
धनं प्रभूतं सह स्त्रीभिः, स्वजनास्तथा कामगुणाः प्रकामाः ।
तपः कृते तप्यते यस्य लोकः, तत्सर्वं स्वाधीनमिहैव युवयोः॥१६॥

धणेण किं धम्मधुराहिगारे, सयणेण वा कामगुणेहिं चेव ।
समणा भविस्सामु गुणोहधारी, वहिंविहारा अभिगम्म भिक्खं।१७।
धनेन किं धर्मधुराधिकारे, स्वजनेन वा कामगुणैश्चैव ।
श्रमणौ भविष्यावो गुणौघधारिणौ, वहिर्विहारावभिगम्य भिक्षाम्

जहा य अग्गी अरणी असन्तो, खीरे घयं तेल्लमहा तिलेसु ।
एमेव जाया सरीरंसि सत्ता, संमुच्छई नासइ नावचिट्ठे ॥१८॥
यथा चाग्निरणितोऽसन् , क्षीरे घृतं तैलं महातिलेषु ।
एवमेव जातौ शरीरे सत्वाः,संमूर्च्छन्ति नश्यन्ति नावतिष्ठन्ते१८॥

नोइन्दियग्गेज्झ अमुत्तभावा, अमुत्तभावा वि य होइ निच्चो ।
अज्झत्थहेउं नियथस्स बन्धो, संसारहेउं च वयन्ति बन्धं ॥१९॥
नो इन्द्रियग्राह्योऽमूर्तभावात् , अमूर्तभावादपि च भवति नित्यः।
अध्यात्महेतुर्नियतस्य बन्धः, संसारहेतुं च वदन्ति बन्धम् ॥१९॥

जहा वयं धम्मं अजाणमाणा, पावं पुरा कम्ममकासि मोहा ।
ओरुब्भमाणा परिरक्खियन्ता, तं नेव भुज्जो वि समायरामो॥२०॥
यथाऽऽवां धर्ममजानानौ, पापं पुराकर्माकार्ष्व मोहात् ।
अवरुध्यमानौ परिरक्ष्यमाणौ, तन्नैव भूयोऽपि समाचरावः॥२०॥

अब्भाहयम्मि लोगम्मि, सव्वओ परिवारिए ।
अमोहाहिं पडन्तीहिं, गिहंसि न रइं लभे ॥२१॥

अभ्याहते लोके, सर्वतः परिवारिते ।
अमोघाभिः [1]पतन्तीभिः, गृहे न रति लभावहे ॥२१॥

केण अब्भाहओ लोगो, केण वा परिवारिओ ।
का वा अमोहा वुत्ता, जाया चिन्तावरो हुमे ॥२२॥
केनाभ्याहतो लोकः, केन वा परिवारितः ।
का वाऽमोघा उक्ताः, जातौ ! चिन्तापरो भवामि ॥२२॥

मच्चुणाऽब्भाहओ लोगो, जराए परिवारिओ ।
अमोहा रयणी वुत्ता, एवं ताय विजाणह ॥२३॥
मृत्युनाभ्याहतो लोकः, जरया परिवारितः ।
अमोघा रात्रय उक्ताः, एवं तात विजानीहि ॥२३॥

जा जा वच्चइ रयणी, न सा पडिनियत्तई ।
अहम्मं कुणमाणस्स, अफला जन्ति राइओ ॥२४॥
या या व्रजति रजनीः, न सा प्रतिनिवर्तते
अधर्मं कुर्वाणस्य, अफला यान्ति रात्रयः ॥२४॥

जा जा वच्चइ रयणी, न सा पडिनियत्तई ।
धम्मं च कुणमाणस्स, सफला जन्ति राइओ ॥२५॥
या या व्रजति रजनी, न सा प्रतिनिवर्तते ।
धर्मं च कुर्वाणस्य, सफला यान्ति रात्रयः ॥२५॥

एगओ संवसित्ताणं, दुहओ सम्मत्तसंजुया ।
पच्छा जाया गमिस्सामो, भिक्खमाणा कुले कुले ॥२६॥
एकतः समुष्य, [2]द्वये सम्यक्त्वसंयुताः ।
पश्चाज्जातौ गमिष्यामः, भिक्षमाणा गृहे गृहे ॥२६॥

जस्सत्थि मच्चुणा सक्खं, जस्स वऽत्थि पलायणं ।
जो जाणे न मरिस्सामि, सो हु कंखे सुए सिया ॥२७॥

१ शस्त्रधारावडे. २ चारेजणा.

यस्यास्तिमृत्युनासख्यं, यस्य वास्ति पलायनम् ।
यो जानीते न मरिष्यामि, स खलु काङ्क्षति श्वः स्यात॥२७॥

अज्जेव धम्मं पडिवज्जयामो, जहिं पवन्ना न पुणब्भवामो ।
अणागयं नेव य अत्थि किंचि, सद्धाखमं णे विणइत्तु रागं ॥२८॥

अद्यैव धर्मं प्रतिपद्यावहे, यं (धर्मं) प्रपन्नौ न [1]पुनर्भविष्यामः ।
अनागतं नैवचास्ति किंचित्, श्रद्धाक्षमं नो विनीय रागम्॥२८॥

पहीणपुत्तस्स हु नत्थि वासो, वासिट्ठि भिक्खायरियाइ कालो ।
साहाहि रुक्खो लहई समाहिं, छिन्नाहि साहाहि तमेव खाणुं ॥२९॥

प्रहीणपुत्रस्य खलु नास्ति वासः, वासिष्ठि! भिक्षाचर्यायाः कालः।
शाखाभिर्वृक्षोलभतेसमाधिं,छिन्नाभिःशाखाभिस्तमेवस्थाणुम्(जानीहि)

पंखाविहूणो व्व जहेह पक्खी, भिच्चविहूणो व्व रणे नरिन्दो ।
विवन्नसारो वणिओ व्व पोए, पहीणपुत्तो मि तहा अहंपि ॥३०॥

पक्षविहीन इव यथेह पक्षी, भृत्यविहीन इव रणे नरेन्द्रः ।
विपन्नसारो वणिगिवपोते, प्रहीनपुत्रोऽस्मि तथाऽहमपि ॥३०॥

सुसंभिया कामगुणा इमे ते, संपिण्डिआ अग्गरसप्पभूया ।
भुंजामु ता कामगुणे पगामं, पच्छा गमिस्सामु पहाणमग्गं ॥३१॥

सुसंभृताः कामगुणा इमे ते, सपिण्डिता अग्र्यरसप्रभूताः ।
भुंजीवहि तान् कामगुणान् प्रकामं, पश्चाद् गमिष्यावः प्रधानमार्गं॥

भुत्ता रसा भोइ जहाइ णे वओ, न जीवियट्ठा पजहामि भोए।
लाभं अलाभं च सुहं च दुक्खं, संचिक्खमाणो चरिस्सामि मोणं॥

भुक्ता रसा भवति!जहत्यस्मान् वयः, न जीवितार्थं प्रजहामि भोगान्
लाभमलाभं च सुखंच दुःखं, संवीक्षमाणश्चरिष्यामि मौनम् ॥३२॥

मा हु तुमं सोयरियाण सम्मरे, जुण्णो व हंसो पडिसोत्तगामी ।
भुंजाहि भोगाइ मए समाणं, दुक्खं खु भिक्खायरियाविहारो॥३३॥

---

१ फरीवार संसारी.

मा खलु त्वं [1]सौंदर्याणां स्मार्षीः, जीर्ण इव हंसः प्रतिस्रोतोगामी।
भुंक्ष्व भोगान् मया समं, दुःखं खलु भिक्षाचर्याविहारः ॥३३॥

जहा य भोई तणुयं भुयंगो, निम्मोयणिं हिच्च पलेइ मुत्तो ।
एमेए जाया पयहन्ति भोए, ते हं कहं नाणुगमिस्समेक्को ॥३४॥
यथा च भवति! तनुजां भुजंगः, [2]निर्मोचनो हित्वा पर्येति मुक्तः ।
एवमेतौ जातौ प्रजहीतो भोगान्,तौ(प्रति)अहंकथंनानुगमिष्याम्येकः॥

छिन्दित्तु जालं अबलं व रोहिया, मच्छा जहा कामगुणे पहाय।
धोरेयसीला-तवसा उदारा, धीरा हु भिक्खायरियं चरन्ति ॥३५॥
छित्त्वा जालमबलमिव रोहिताः,मत्स्या यथाकामगुणान्प्रहाय ।
धौरेयशीलास्तपसोदाराः, धीराः खलुभिक्षाचर्या चरन्ति॥३५॥

नहेव कुंचा समइक्कमन्ता, तयाणि जालाणि दलित्तु हंसा ।
पलेंति पुत्ता य पई य मज्झं, ते हं कहं नाणुगमिस्समेक्का ॥३६॥
नभसीव क्रौंचाः समतिक्रामन्तः, ततानि जालानि दलित्वा हंसाः
परियांति पुत्रौ च पतिश्चमम, तानहं कथं नानुगमिष्याम्येका३६॥

पुरोहियं तं ससुयं सदारं, सोच्चाऽभिनिक्खम्म पहाय भोए ।
कुडुम्बसारं विउलुत्तमं च, रायं अभिक्खं समुवाय देवी ॥३७॥
पुरोहितं तं ससुतं सदारं, श्रुत्वाऽभिनिःक्रम्य प्रहाय भोगान् ।
कुटुंबसारं विपुलोत्तमं च, राजानमभीक्ष्णं समुवाच देवी ॥३७॥

वंतासी पुरिसो रायं, न सो होइ पसंसिओ ।
माहणेण परिच्चत्तं, धणं आयाउमिच्छसि ॥३८॥
वांताशी-पुरुषो राजन् , न स भवति प्रशंसनीयः ।
ब्राह्मणेन परित्यक्तं, धनमादातुमिच्छसि ॥३८॥

सव्वं जगं जइ तुहं, सव्वं वावि धणं भवे ।
सव्वं पि ते अपज्जत्तं, नेव ताणाय तं तव ॥३९॥

---

१ स्नेहीयोना भोगोने. २ कांचळी.

सर्वं जगद्यदि तव, सर्वं वापि धनं भवेत् ।
सर्वमपि त अपर्याप्तं, नैव त्राणाय तत्तव ॥३९॥

मरिहिसि रायं जया तया वा, मणोरमे कामगुणे पहाय ।
एक्को हु धम्मो नरदेव ताणं, न विज्जई अन्नमिहेह किंचि ॥४०॥
मरिष्यसि राजन् यदा तदा वा, मनोरमान् कामगुणान्प्रहाय ।
एकः खलु धर्मो नरदेव त्राणं, न विद्यतेऽन्यमिहेह किंचित् ॥४०॥

नाहं रमे पक्खिणि पंजरे वा, संताणछिन्ना चरिस्सामि मोणं ।
अकिंचणा उज्जुकडा निरामिसा, परिग्गहारम्भनियत्तदोसा ॥४१॥
नाहं रमे पक्षिणी पञ्जर इव, छिन्नसंताना चरिष्यामि मौनम् ।
अकिंचना ऋजुकृता निरामिषा, परिग्रहारंभदोषनिवृत्ता ॥४१॥

दवग्गिणा जहा रण्णे, डज्झमाणेसु जन्तुसु ।
अन्ने सत्ता पमोयन्ति, रागद्दोसवसं गया ॥४२॥
दवाग्निना यथारण्ये, दह्यमानेषु जन्तुषु ।
अन्ये सत्त्वाः प्रमोदन्ते, रागद्वेषवशं गताः ॥४२॥

एवमेव वयं मूढा, कामभोगेसु मुच्छिया ।
डज्झमाणं न बुज्झामो, रागद्दोसग्गिणा जगं ॥४३॥
एवमेव वयं मूढाः, कामभोगेषु मूर्च्छिताः ।
दह्यमानं न बुध्यामहे, रागद्वेषाग्निना जगत् ॥४३॥

भोगे भोच्चा वमित्ता य, लहुभूयविहारिणो ।
आमोयमाणा गच्छन्ति, दिया कामकमा इव ॥४४॥
भोगान् भुक्त्वा वान्त्वा च, लघुभूतविहारिणः ।
आमोदमाना गच्छन्ति, द्विजाः कामक्रमा इव ॥४४॥

इमे य बद्धा फन्दन्ति, मम हत्थज्जमागया ।
वयं च सत्ता कामेसु, भविस्सामो जहा इमे ॥४५॥

इमे च बद्धाः स्पन्दन्ते, मम हस्तमागताः ।
वयं च सक्ताः कामेषु, भविष्यामो यथेमे ॥४५॥

सामिसं कुललं दिस्स, वज्झमाणं निरामिसं ।
आमिसं सव्वमुज्झित्ता, विहरिस्सामि निरामिसा ॥४६॥

सामिषं [1]कुललं दृष्ट्वा, बाध्यमानं निरामिषम् ।
आमिषं सर्वमुज्झित्वा, विहरिष्यामि निरामिषा ॥४६॥

गिद्धोवमा उ नच्चाणं, कामे संसारवड्ढणे ।
उरगो सुवण्णपासे व्व, संकमाणो तणुं चरे ॥४७॥

गृध्रोपमान् तु ज्ञात्वा, कामान् संसारवर्धनान् ।
उरगः सौपर्णेयपार्श्वे इव, शंकमानस्तनु चरेत् ॥४७॥

नागो व्व बंधणं छित्ता, अप्पणो वसहिं वए ।
एयं पत्थं महारायं, उसुयारि त्ति मे सुयं ॥४८॥

नाग इव बन्धनं छित्त्वा, आत्मनो वसतिं व्रजेत् ।
एतत्पथ्यं महाराज!, इषुकार! इति मया श्रुतम् ॥४८॥

चइत्ता विउलं रज्जं, कामभोगे य दुच्चए ।
निव्विसया निरामिसा, निन्नेहा निप्परिग्गहा ॥४९॥

त्यक्त्वा विपुलं राज्यं, कामभोगांश्च दुस्त्यजान् ,
निर्विषयौ निरामिषौ, निःस्नेहौ निःपरिग्रहौ ॥४९॥

सम्मं धम्मं वियाणित्ता, चिच्चा कामगुणे वरे ।
तवं पगिज्झऽहक्खायं, घोरं घोरपरक्कमा ॥५०॥

सम्यग् धर्मं विज्ञाय, त्यक्त्वा कामगुणान् वरान् ।
तपःप्रगृह्य यथाख्यातं घोरं घोरपराक्रमौ ॥५०॥

एवं ते कमसो बुद्धा, सव्वे धम्मपरायणा ।
जम्ममच्चुभउव्विग्गा, दुक्खस्सन्तगवेसिणो ॥५१॥

१ गृध्र.

एवं [1]ते क्रमशो बुध्धाः, सर्वे धर्मपरायणाः ।
जन्ममृत्युभयोद्विग्नाः, दुःखस्यान्तगवेषिणः ॥५१॥

सासणे विगयमोहाणं, पुव्विं भावणभाविया ।
अचिरेणेव कालेण, दुक्खस्सन्तमुवागया ॥५२॥

शासने विगतमोहानां, पूर्व भावनाभाविताः ।
अचिरेणैव कालेन, दुःखस्यान्तमुपागताः ॥५२॥

राया सह देवीए, माहणो य पुरोहिओ ।
माहणी दारगा चेव, सव्वे ते परिनिव्वुडे ॥५३॥

राजा सह देव्या, ब्राह्मणश्च पुरोहितः ।
ब्राह्मणी दारकौ चैव, सर्वे ते परिनिर्वृताः ॥५३॥

॥ त्ति बेमि ॥ इति उसुयारिज्जं अज्झयणं समत्तं ॥१४॥
इतिब्रवीमि—इति इषुकारीयमध्ययनं समाप्तम् ॥१४॥

---

## ॥ अह सभिक्खू पंचदहं अज्झयणं ॥

### ॥ अथ सभिक्षुर्नामपंचदशमध्ययनं ॥

मोणं चरिस्सामि समिच्च धम्मं, सहिए उज्जुकडे नियाणछिन्ने ।
संथवं जहिज्ज अकामकामे, अन्नायएसी परिव्वए स भिक्खू ॥१॥

मौनं चरिष्यामि समेत्य धर्म, सहित ऋजुकृतः छिन्ननिदानः ।
संस्तवं जह्यादकामकामी, अज्ञातैषी परिव्रजेत् स भिक्षुः ॥१॥

राओवरयं चरेज्ज लाढे, विरए वेयवियायरक्खिए ।
पन्ने अभिभूय सव्वदंसी, जे कम्हिवि न मुच्छिए स भिक्खू ॥२॥

रागोपरतश्चरेल्लाढः, विरतो वेदविदात्मरक्षितः ।
प्राज्ञोऽभिभूय सर्वदर्शी, यः कस्मिन्नपि न मुर्च्छितः सभिक्षुः ॥२॥

---

1 ते छए जीवो.

अक्कोसवहं विइत्तु धीरे, मुणी चरे लाढे निच्चमायगुत्ते ।
अव्वग्गमणे असंपहिट्ठे, जे कसिणं अहियासए स भिक्खू ॥३॥
आक्रोशवधं विदित्वा धीरः, मुनिश्चरेल्लाढो नित्यमात्मगुप्तः ।
अव्यग्रमना असंप्रहृष्टः, यः कृत्स्नमध्यासयेत् स भिक्षुः ॥३॥

पन्तं सयणासणं भइत्ता, सीउण्हं विविहं च दंसमसगं ।
अव्वग्गमणे असंपहिट्ठे, जे कसिणं अहियासए स भिक्खू ॥४॥
प्रान्तं शयनासनं भजित्वा, शीतोष्णं विविधं च दंशमशकम् ।
अव्यग्रमना असंप्रहृष्टः, यः कृत्स्नमध्यासयेत् स भिक्षुः ॥४॥

नो सक्कइमिच्छई न पूयं, नो वि य वन्दणगं कुओ पसंसं ।
से संजए सुव्वए तवस्सी, सहिए आयगवेसए स भिक्खू ॥५॥
न सत्कृतिमिच्छति न पूजां, नोऽपि च वन्दनकं कुतः प्रशंसां ।
स संयतः सुव्रतस्तपस्वी, सहित आत्मगवेषकः स भिक्षुः ॥५॥

जेण पुण जहाइ जीवियं, मोहं वा कसिणं नियच्छई ।
नरनारिं पजहे सया तवस्सी, न य कोऊहलं उवेइ स भिक्खू ॥
येन पुनर्जहाति जीवितं, मोहं वा कृत्स्नं नियच्छति ।
नरनारिं प्रजह्यात् सदा तपस्वी, न च कौतूहलमुपैति स भिक्षुः ॥

छिन्नं सरं भोममन्तलिक्खं, सुमिणं लक्खणदण्डवत्थुविज्जं ।
अंगवियारं सरस्स विजयं, जे विज्जाहिं न जीवइ स भिक्खू ॥७॥
[1]छिन्नं [2]स्वरं [3]भौम [4]मन्तरिक्षं, स्वप्नं लक्षणदण्डवास्तुविद्याम्
[5]अंगविकारं [6]स्वरस्यविजयं, यो विद्याभिर्न जीवति स भिक्षुः ॥७॥

मन्तं मूलं विविहं वेज्जचिन्तं, वमणविरेयणधुमणेत्तसिणाणं ।
आउरे सरणं तिगिच्छियं च, तं परिन्नाय परिव्वए स भिक्खू ॥

१ छेदनक्रियायुक्त विद्या. २ षड्जादि राग. ३ पृथ्वीरूप वगेरे. ४ आकाशना ग्रहादि. ५ शरीरनां तथा नेत्रादिना फरकवा. ६ दुर्गाशृगालादिना स्वरोनी चिकित्सा.

मंत्रं मूलं विविधं वैद्यचिन्तां, वमनविरेचनधूमनेत्रस्नानं ।
आतुरस्मरणं चिकित्सकं च, तत् परिज्ञाय परिव्रजेत् स भिक्षुः

खत्तियगणउग्गरायपुत्ता, माहणभोइय विविहा य सिप्पिणो ।
नो तेसिं वयइ सिलोगपूयं, तं परिन्नाय परिव्वए स भिक्खू ॥९॥
क्षत्रियगणोग्रराजपुत्राः, ब्राह्मणा भोगिका विविधाश्च शिल्पिनः।
नो तेषां वदति श्लोकपूजां, तत्परिज्ञाय परिव्रजेत् स भिक्षुः॥९॥

गिहिणो जे पव्वइएण दिट्ठा, अप्पवइएण व संथुया हविज्जा ।
तेसिं इहलोइयफलट्ठा, जो संथवं न करेइ स भिक्खू ॥१०॥
गृहिणो ये प्रव्रजितेन दृष्टाः, अप्रव्रजितेन च संस्तुता भवेयुः ।
तेषामिहलौकिकफलार्थं, यःसंस्तवं न करोति स भिक्षुः ॥१०॥

सयणासणपाणभोयणं, विविहं खाइमसाइमं परेसिं ।
अदए पडिसेहिए नियण्ठे, जे तत्थ न पउस्सई स भिक्खू ॥११॥
शयनासनपानभोजनं, विविध खाद्यं स्वाद्यं परैः ।
अददृभिः प्रतिषिद्धः निग्रन्थो, यस्तत्र न प्रदुष्यति स भिक्षुः११

जं किंचि आहारपाणगं विविहं, खाइमसाइमं परेसिं लध्धुं ।
जो तं तिविहेण नाणुकम्पे, मणवयकायसुसंवुडे स भिक्खू ॥१२॥
यत्किंचिदाहारपानकं विविधं, खाद्यं स्वाद्यं परेभ्यो लब्ध्वा ।
यस्तत् त्रिविधेन नानुकंपेत, संवृतमनोवाक्कायः स भिक्षुः॥१२॥

आयामगं चेव जवोदणं च, सीयं सोवीरजवोदगं च ।
न हीलए पिण्डं नीरसं तु, पन्तकुलाई परिव्वए स भिक्खू॥१३॥
आयामकं चेव यवौदनं च, शीतं [1]सौवीरं यवोदकं च ।
न हीलयेत्पिण्ड निरसं तु, प्रान्तकुलानि परिव्रजेत्स भिक्षुः ॥

सद्दा विविहा भवन्ति लोए, दिव्वा माणुस्सगा तिरिच्छा ।
भीमा भयभेरवा उराला, जो सोच्चा न विहिज्जई स भिक्खू॥१४॥

1 कांजी.

शब्दा विविधा भवन्ति लोके, दिव्या मानुष्यकास्तैरश्चाः ।
भीमौ भयभैरवा उदाराः, यः श्रुत्वा न बिभेति स भिक्षुः॥१४॥
वादं विविहं समिच्च लोए, सहिए खेयाणुगए य कोवियप्पा।
पन्ने अभिभूय सव्वदंसी, उवसन्ते अविहेडए स भिक्खू ॥१५॥
वादं विविधं समेत्य लोके, सहितः खेदानुगतश्चकोविदात्मा ।
प्राज्ञोऽभिभूय सर्वदर्शी, उपशान्तोऽविहेटकः स भिक्षुः ॥१५॥
असिप्पजीवी अगिहे अमित्ते, जिइन्दिए सव्वओ विप्पमुक्के ।
अणुक्कसाई लहुअप्पभक्खी, चिच्चा गिहं एगचरं स भिक्खु॥१६॥
अशिल्पजीव्यगृहोऽमित्रः, जितेन्द्रियः सर्वतो विप्रमुक्तः ,
अणुकषायी लघ्वल्पभक्षी, त्यक्त्वा गृहमेकचरः स भिक्षुः॥१६॥

त्ति बेमि॥ इति सभिक्खुयं समत्तं ॥
इतिब्रवीमि--इतिसभिक्षुकं समाप्तं

---

## ॥ अह बम्भचेरसमाहिठाणाणाम सोलसमं अज्झयणं ॥

अथ ब्रह्मचर्यसमाधिस्थानं नाम षोडशमध्ययनं

सुयं मे आउसं-तेणं भगवया एवमक्खायं। इह खलु थेरेहिं भगवन्तेहिं दस बम्भचेरसमाहिठाणा पन्नत्ता, जे भिक्खू सोच्चा निसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबम्भयारी सया अप्पमत्ते विहरेज्जा। कयरे खलु ते थेरेहिं भगवन्तेहिं दस बम्भचेरसमाहिठाणा पन्नत्ता, जे भिक्खू सोच्चा निसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबम्भयारी सया अप्पमत्ते विहरेज्जा। इमे खलु ते थेरेहिं भगवन्तेहिं दस बम्भचेरठाणा पन्नता, जे भिक्खू

सोच्चा निसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिं-दिए गुत्तबम्भयारी सया अप्पमत्ते विहरेज्जा॥ तं जहा विवित्ताइं सयणासणाइं सेवित्ता हवइ से निग्गन्थे । नो इत्थीपसुपण्डग-संसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गन्थे । तं कहमिति चे । आयरियाह । निग्गन्थस्स खलु इत्थिपसुपण्डगसंसत्ताइं सयणासणाइं सेवमाणस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलि-पन्नत्ताओ धम्माओ भंसेज्जा। तम्हा नो इत्थिपसुपण्डगसंसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गन्थे ॥ १ ॥

श्रुतं मया आयुष्मन् ! तेन भगवतैवमाख्यातम् , इह खलु स्थविरैर्भगवद्भिर्दश ब्रह्मचर्यसमाधिस्थानानि प्रज्ञप्तानि, तानि भिक्षुः श्रुत्वा निशम्य बहुलसंयमो बहुलसंवरो बहुलसमाधि गुप्तो गुप्तेन्द्रियो गुप्तब्रह्मचारी सदाऽप्रमत्तोविहरेत् । कतराणि खलु तानि? स्थविरैर्भगवद्भिर्दशब्रह्मचर्यसमाधिस्थानानि प्रज्ञ-प्तानि, यानि भिक्षुः श्रुत्वा निशम्य बहुलसंयमो बहुलसंवरो बहुलसमाधिर्गुप्तो गुप्तेन्द्रियो गुप्तब्रह्मचारी सदाऽप्रमत्तो विह-रेत् । इमानि खलु स्थविरैर्भगवद्भिर्दशब्रह्मचर्यसमाधिस्थानानि प्रज्ञप्तानि,यानि भिक्षुः श्रुत्वा निशम्य बहुलसंयमो बहुलसंवरो बहुलसमाधिर्गुप्तो गुप्तेन्द्रियो गुप्तब्रह्मचारी सदाऽप्रमतो विह-रेत् । तद्यथा विविक्तानि शयनासनानि सेविता, भवति स निर्ग्रन्थः । न स्त्रीपशुपण्डकसंसक्तानि शयनासनानि सेविता भवति स निर्ग्रन्थः। तत् कथमितिचेत्? आचार्य आह, निर्ग्रन्थस्य

खलु स्त्रीपशुपण्डकसंसक्तानि, शयनासनानि सेवमानस्य ब्रह्मचारिणो ब्रह्मचर्ये शंका वा कांक्षा वा [१]विचिकित्सा वा समुत्पद्येत, [२]भेदं वा लभेत, उन्मादं वा प्राप्नुयात्, दीर्घकालिको वा रोगातङ्को भवेत्, केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत्, तस्मान्नो, स्त्रीपशुपण्डकससक्तानि शयनासनानि सेविता भवति स निर्ग्रन्थः ॥१॥

नो इत्थीणं कहं कहित्ता हवइ से निग्गन्थे । तं कहमिति चे । आयरियाह । निग्गन्थस्स खलु इत्थीण कहं कहेमाणस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा । तम्हा नो इत्थीणं कहं कहेज्जा ॥ २ ॥

नो स्त्रीणां कथां कथयिता भवति स निर्ग्रन्थः, तत्कथमिति चेत् ? आचार्य आह । निर्ग्रन्थस्य खलु स्त्रीणां कथां कथयतो ब्रह्मचारिणो ब्रह्मचर्ये शङ्का वा काङ्क्षा वा विचिकित्सा वा समुत्पद्येत, भेदं वा लभेत, उन्मादं वा प्राप्नुयात दीर्घकालिको वा रोगातङ्को भवेत, केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत्, तस्मान्नोस्त्रीणां कथां कथयेत् ॥२॥

नो इत्थीणं सद्धिं सन्निसेज्जागए विहरित्ता हवइ से निग्गन्थे । तं कहमिति चे । आयरियाह । निग्गन्थस्स खलु इत्थीहिं सद्धिं सन्निसेज्जागयस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा । तम्हा खलु नो निग्गंथे इत्थीहिं सद्धिं सन्निसेज्जागए विहरेज्जा ॥ ३ ॥

नो स्त्रीभिः सार्धं सन्निषद्यागतो विहर्ता भवति स निर्ग्रन्थः, तत्कथमितिचेत् ! आचार्य आह। निर्ग्रन्थस्य खलु स्त्रीभिः सार्धं सन्निषद्यागतस्य ब्रह्मचारिणो ब्रह्मचर्ये शङ्का वाऽऽकाङ्क्षा वा विचिकित्सा वा समुत्पद्येत, भेदं वा लभेत, उन्मादंवा प्राप्नुयात्, दीर्घकालिकोवा रोगातङ्को भवेत्; केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत् तस्मात्खलु नो निर्ग्रन्थः स्त्रीभिः सार्धं सन्निषद्यागतो विहरेत् ॥३॥

नो इत्थीणं इन्दियाइं मणोहराइं मणोरमाइं आलोइत्ता निज्झाइत्ता हवइ से निग्गन्थे। तं कहमिति चे। आयरियाह। निग्गन्थस्स खलु इत्थीणं इन्दियाइं मणोहराइं मणोरमाइं आलोएमाणस्स निज्झायमाणस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा। तम्हा खलु नो निग्गन्थे इत्थीणं इन्दियाइं मणोहराइं मणोरमाइं आलोएज्जा निज्झाएज्जा ॥ ४ ॥

नो स्त्रीणामिन्द्रियाणि मनोहराणि, मनोरमाण्यालोकयिता निर्ध्याता भवति स निर्ग्रन्थः। तत्कथमितिचेत् ! आचार्य आह। निर्ग्रन्थस्य खलु स्त्रीणामिन्द्रियाणि मनोहराणि मनोरमाण्यवलोकमानस्य निर्ध्यायतो ब्रह्मचारिणो ब्रह्मचर्ये शङ्का वाऽऽकाङ्क्षा वा विचिकित्सा वा समुत्पद्येत, भेदं वा लभेत, उन्मादंवा प्राप्नुयात्, दीर्घकालिको वा रोगातङ्को भवेत्; केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत् तस्मात् खलु नो निर्ग्रथः स्त्रीणामिन्द्रियाणि मनोहराणि मनोरमाण्यालोकयेन्निर्ध्यायेत् ॥४॥

नो इत्थीणं कुड्डन्तरंसि वा दूसन्तरंसि वा भित्तन्तरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कन्दियसद्दं वा विलवियसद्दं वा सुणेत्ता हवइ से निग्गन्थे। तं कहमिति चे। आयरियाह। निग्गन्थस्स खलु इत्थीणं कुड्डन्तरंसि वा दूसन्तरंसि वा भित्तन्तरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं वा कन्दियसद्दं वा विलवियसद्दं वा सुणेमाणस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा केवलिपन्नत्ताओ धम्माओ भंसेज्जा। तम्हा खलु नो निग्गन्थे इत्थीणं कुड्डन्तरंसि वा दूसन्तरंसि वा भित्तंतरंसि वा कूइयसद्दं वा रुइयसद्दं वा गीयसद्दं वा हसियसद्दं वा थणियसद्दं कन्दियसद्दं वा विलवियसद्दं वा सुणेमाणे विहरेज्जा ॥ ५ ॥

नो स्त्रीणां कुड्यान्तरे वा दूष्यान्तरे वा भित्यन्तरे वा कूजितशब्दं वा, रुदितशब्दं वा, गीतशब्दं वा, हसितशब्दं वा, स्तनितशब्दं वा, क्रन्दितशब्दं वा, विलपितशब्दं वा, श्रोता(न)भवति स निर्ग्रन्थ, तत्कथमितिचेत्? आचार्यआह। निर्ग्रन्थस्य खलु स्त्रीणांकुड्यान्तरे वा, दुष्यान्तरे वा भित्यन्तरे वा, कुजितशब्द वा, रुदितशब्दं वा, गीतशब्दं वा हसित शब्दं वा, स्तनितशब्दं वा, क्रन्दितशब्दं वा, विलपितशब्दं वा, श्रृण्वतो ब्रह्मचारिणो ब्रह्मचर्ये शङ्कावा काङ्क्षा विचिकित्सा वा समुत्पद्येत भेदं वा लभेत, उन्मादं वा प्राप्नुयात् दीर्घकालिको वा रोगातङ्को भवेत्, केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत्। तस्मात् खलु नो निर्ग्रंथः स्त्रीणां कुड्यान्तरेवा, दूष्यान्तरे वा, भित्त्यन्तरेवा,

कूजितशब्दं वा, रुदितशब्दं वा गीतशब्दं वा, हसितशब्दं वा, स्तनितशब्दं वा, क्रन्दितशब्दं वा, विलपितशब्दं वा, श्रण्वन् विहरेत् ॥५॥

नो निग्गन्थे पुव्वरयं पुव्वकीलियं अणुसरित्ता हवइ से निग्गन्थे। तं कहमिति चे। आयरियाह। निग्गन्थस्स खलु पुव्वरयं पुव्वकीलियं अणुसरमाणस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा। तम्हा खलु नो निग्गन्थे पुव्वरयं पुव्वकीलियं अणुसरेज्जा ॥ ६ ॥

नो निर्ग्रथः पूर्वरतं पूर्वक्रीडित मनुस्मर्ता भवेत् स निर्ग्रंथः तत्कथमितिचेत् ! आचार्य आह। निर्ग्रन्थस्य खलु पूर्वरतं पूर्वक्रीडित मनुस्मरतो ब्रह्मचारिणो ब्रह्मचर्ये शङ्का वा काङ्क्षा वा विचिकित्सा वा समुत्पद्येत भेदं वा लभेत उन्मादं वा प्राप्नुयात्, दीर्घकालिको वा, रोगातङ्को भवेत्, केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत, तस्मात् खलु नो निर्ग्रंथः पूर्वरतं पूर्वक्रीडितमनुस्मरेत् ॥६॥

नो पणीयं आहारं आहारित्ता हवइ से निग्गन्थे। तं कहमिति चे। आयरियाह। निग्गन्थस्स खलु पणीयं आहारं आहारेमाणस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा। तम्हा खलु नो निग्गन्थे पणीयं आहारं आहारेज्जा ॥ ७ ॥

नो प्रणीत माहरमाहर्ता भवेत् स निर्ग्रन्थः। तत्कथमितिचेत्! आचार्य आह। निर्ग्रन्थस्य खलु प्रणोतमाहारमाहरतो ब्रह्मचारिणो ब्रह्मचर्ये शङ्का वा, काङ्क्षा वा विचिकित्सा वा समुत्पद्येत, भेदं वा लभेत, उन्मादं वा प्राप्नुयात्, दीर्घकालिको वा रोगातङ्को भवेत् केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत्, तस्मात् खलु नो निर्ग्रन्थः प्रणोतमाहरेत् ॥७॥

नो अइमायाए पाणभोयणं आहारेत्ता हवइ से निग्गन्थे। तं कहमिति चे। आयरियाह। निग्गन्थस्स खलु अइमायाए पाणभोयणं आहारेमाणस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा। तम्हा खलु नो निग्गन्थे अइमायाए पाणभोयणं आहारेज्जा ॥ ८ ॥

नो अतिमात्रया पानभोजनमाहर्ता भवति स निर्ग्रन्थः तत् कथमितिचेत्? आचार्य आह। निर्ग्रन्यस्य खल्वतिमात्रया पानभोजनमाहरतो ब्रह्मचारिणो ब्रह्मचर्ये शङ्कावा काङ्क्षावा, विचिकित्सा वा समुत्पद्येत, भेदं वा लभेत, उन्मादं वा प्राप्नुयात्, दीर्घकालिको वा रोगातङ्को भवेत्, केवलिप्रज्ञप्ताद्धर्माद् भ्रश्येत्, तस्मात् खलु नो निर्ग्रन्थोऽतिमात्रया पानभोजनमाहरेत् ॥८॥

नो विभूसाणुवादी हवइ से निग्गन्थे। तं कहमिति चे। आयरियाह। विभूसावत्तिए विभूसियसरीरे इत्थिजणस्स अभिलसणिज्जे हवइ। तओ णं तस्स इत्थिजणेणं अभिलसिज्जमाणस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्प-

ज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा । तम्हा खलु नो निग्गन्थे विभूसाणुवादी हविज्जा ॥ ९ ॥

नो विभूषानुपाती भवति स निर्ग्रन्थः तत् कथमितिचेत् आचार्य आह । विभूषावर्तिको विभूषितशरीरः स्त्रीजनस्याभिलषनीयो भवति, ततस्तस्य स्त्रीजनेनाभिलष्यमाणस्य शङ्कावा काङ्क्षावा विचिकित्सावा समुत्पद्येत, भेदं वा लभेत, उन्मादं वा प्राप्नुयात् दीर्घकालिको वा रोगातङ्को भवेत् केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत् तस्मात् खलु नो निर्ग्रन्थो विभूषानुपाती भवेत्॥९॥

नो सद्दरूवरसगन्धफासाणुवादी हवइ से निग्गन्थे । तं कहमिति चे । आयरियाह । निग्गन्थस्स खलु सद्दरूवरसगन्धफासाणुवादिस्स बम्भयारिस्स बम्भचेरे संका वा कंखा वा विइगिच्छा वा समुप्पज्जिज्जा, भेदं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हवेज्जा, केवलिपन्नत्ताओ धम्माओ भंसेज्जा । तम्हा खलु नो सद्दरूवरसगन्धफासाणुवादी भवेज्जा से निग्गन्थे । दसमे बम्भचेरसमाहिठाणे हवइ ॥१०॥

नो शब्दरूपरसगन्धस्पर्शानुपाती भवति स निर्ग्रन्थः ततूकथमितिचेत् ? आचार्य आह निर्ग्रन्थस्य खलु शब्दरूपरसगन्धस्पर्शानुपातिनो ब्रह्मचारिणो ब्रह्मचर्ये शङ्कावा काङ्क्षावा विचिकित्सावा समुत्पद्येत, भेदं वा लभेत, उन्मादं वा प्राप्नुयात् , दीर्घकालिको वा रोगातङ्को भवेत्, केवलिप्रज्ञप्ताद् धर्माद् भ्रश्येत् , तस्मात् खलु नो शब्दरूपरसगन्धस्पर्शानुपाती भवेत् स निर्ग्रन्थः । दशमं ब्रह्मचर्यसमाधिस्थानंभवति ॥१०॥

हवन्ति इत्थ सिलोगा । तं जहा ।

भवन्त्यत्र श्लोकाः तद्यथा–

जं विवित्तमणाइण्णं, रहियं इत्थिजणेण य।
बम्भचेरस्स रक्खट्ठा, आलय तु निसेवए ॥१॥
यंविविक्तमनाकीर्णं, रहितं स्त्रीजनेन च ।
ब्रह्मचर्यस्य रक्षार्थं, आलयं तु निषेवेत ॥१॥

मणपल्हायजणणी, कामरागविवड्ढणी ।
बम्भचेररओ भिक्खू, थीकहं तु विवज्जए ॥२॥
मनःप्रह्लादजननीं, कामरागविवर्धनीम् ।
ब्रह्मचर्यरतो भिक्षुः, स्त्रीकथां तु विवर्जयेत् ॥२॥

समं च संथवं थीहि, संकहं च अभिक्खणं ।
बम्भचेररओ भिक्खू, निच्चसो परिवज्जए ॥३॥
समं च संस्तवं स्त्रीभिः, संकथा चाभीक्ष्णम ।
ब्रह्मचर्यरतो भिक्षुः, नित्यशः परिवर्जयेत् ॥३॥

अंगपच्चंगसंठाणं, चारुल्लवियपेहियं ।
बम्भचेररओ थीणं, चक्खुगिज्झं विवज्जए ॥४॥
अंगप्रत्यंगसंस्थानं चारूल्लपितप्रेक्षितम् ।
ब्रह्मचर्यरतःस्त्रीणां, चक्षुर्ग्राह्यं विवर्जयेत् ॥४॥

कूइयं रुइयं, गीयं, हसियं थणियकन्दियं ।
बम्भचेररओ थीणं, सोयगिज्झं विवज्जए ॥५॥
कूजितं रुदितं गीतं, हसितं स्तनितक्रन्दितम् ।
ब्रह्मचर्यरतः स्त्रीणां, श्रोत्रग्राह्यं विवर्जयेत् ॥५॥

हासं किडं रइं दप्पं, सहसावित्तासियाणि य ।
बम्भचेररओ थीणं, नाणुचिन्ते कयाइवि ॥६॥
हास्यं क्रीडां रति दर्पं, सहसापि त्रासितानि च ।
ब्रह्मचर्यरतः स्त्रीणां, नानुचिन्तयेत्कदापि च । ॥६॥

पणीयं भत्तपाणं तु, खिप्पं मयविवड्ढणं ।
बम्भचेररओ भिक्खू, निच्चसो परिवज्जए ॥७॥
प्रणीतं भक्तपानं तु, क्षिप्र मदविवर्धनम् ।
ब्रह्मचर्यरतो भिक्षुः, नित्यशः परिवर्जयेत् ॥७॥

धम्मलद्धं मियं काले, जत्तत्थं पणिहाणवं ।
नाइमत्तं तु भुंजेज्जा, बम्भचेररओ सया ॥८॥
धर्मलब्धं मितं काले, यात्रार्थं प्रणिधानवान् ।
नाऽतिमात्रं तु भुञ्जीत, ब्रह्मचर्यरतः सदा ॥८॥

विभूसं परिवज्जेज्जा, सरीरपरिमण्डणं ।
बम्भचेररओ भिक्खू, सिंगारत्थं न धारए ॥९॥
विभूषां परिवर्जयेत् , शरीरपरिमण्डनम् ।
ब्रह्मचर्यरतो भिक्षुः, शृंगारार्थं न धारयेत् ॥९॥

सद्दे रूवे य गन्धे य, रसे फासे तहेव य ।
पंचविहे कामगुणे, निच्चसो परिवज्जए ॥१०॥
शब्दान्रूपांश्च गन्धांश्च, रसान्स्पर्शांस्तथैवच ।
पंचविधान्कामगुणान् , नित्यशः परिवर्जयेत् ॥१०॥

आलओ थीजणाइण्णो, थीकहा य मणोरमा ।
संथवो चेव नारीणं, तासिं इन्दियदरिसणं ॥११॥
आलयः स्त्रीजनाकीर्णः, स्त्रीकथा च मनोरमा ।
संस्तवश्चैव नारीणां, तासामिन्द्रियदर्शनम् ॥११॥

कूइयं रुइयं गीयं, हासभुत्तासियाणि य ।
पणीयं भत्तपाणं च, अइमायं पाणभोयणं ॥१२॥
कूजितं रुदितं गीतं, (स्मृतानि) हास्यभुक्तासितानिच ।
प्रणीतं भक्तपानं च, अतिमात्रं पानभोजनम् ॥१२॥

गत्तभूसणमिट्ठं च, कामभोगा य दुज्जया ।
नरस्सत्तगवेसिस्स, विसंतालउडं जहा ॥१३॥

गात्रविभूषणमिष्टं च, कामभोगाश्चदुर्जयाः
नरस्यात्मगवेषिणः, विषं तालपुटं यथा ॥१३॥

दुज्जए कामभोगे य, निच्चसो परिवज्जए ।
संकाठाणाणि सव्वाणि, वज्जेज्जा पणिहाणवं ॥१४॥

दुर्जयान्कामभोगांश्च, नित्यशः परिवर्जयेत् ।
शंकास्थानानि सर्वाणि, वर्जयेत्प्रणिधानवान् ॥१४॥

धम्मारामे चरे भिक्खू, धिइमं धम्मसारही ।
धम्मारामरते दन्ते, बम्भचेरसमाहिए ॥१५॥

धर्मारामे चरेद्भिक्षुः, धृतिमान्धर्मसारथिः ।
धर्मारामे रतो दान्तः, ब्रह्मचर्यसमाहितः ॥१५॥

देवदाणवगन्धव्वा, जक्खरक्खसकिन्नरा ।
बम्भयारिं नमंसन्ति, दुक्करं जे करन्ति तं ॥१६॥

देवदानवगन्धर्वाः, यक्षराक्षसकिन्नराः ।
ब्रह्मचारिणं नमस्कुर्वन्ति, दुःकरं यः करोति तत् ॥१६॥

एस धम्मे धुवे निच्चे, सासए जिणदेसिए ।
सिद्धा सिज्झन्ति चाणेण, सिज्झिस्सन्ति तहावरे ॥१७॥

एवधर्मो ध्रुवोनित्यः, शाश्वतो जिनदेशितः ।
सिध्धाः सिध्यन्ति चानेन, सेत्स्यन्ति तथापरे ॥१७॥

त्तिबेमि ॥ इति बम्भचेरसमाहिठाणा समत्ता ॥१६॥

इतिब्रवीमि--इति ब्रह्मचर्यसमाधिस्थानानि समाप्तानि ॥

## ॥ अह पावसमणिज्जं सत्तदहं अज्झयणं ॥

### अथ पापश्रमणीयं सप्तदशमध्ययनं ॥१६॥

जे केइ उ पव्वइए नियण्ठे, धम्मं सुणित्ता विणओववन्ने।
सुदुल्लहं लहिउं बोहिलाभं, विहरेज्ज पच्छा य जहासुहं तु ॥१॥
यः कश्चित्तु प्रव्रजितो निर्ग्रन्थः, धर्मं श्रुत्वा विनयोपपन्नः ।
सुदुर्लभं लब्ध्वा बोधिलाभं, विहरेत् पश्चाच्च यथासुखं तु ॥१॥

सेज्जा दढा पाउरणम्मि अत्थि, उप्पज्जई भोत्तुं तहेव पाउं ।
जाणामि जं वट्टइ आउसु त्ति, किं नाम काहामि सुएण भन्ते ॥
शय्या दृढा प्रावरणं मेऽस्ति, उत्पद्यते भोक्तुं तथैव पातुम् ।
जानामि यद्वर्तत आयुष्मन्निति, किं नाम करिष्यामि श्रुतेन भगवन्

जे केई पव्वइए, निद्दासीले पगामसो ।
भोच्चा पेच्चा सुहं सुवइ, पावसमणि त्ति वुच्चई ॥३॥
यः कश्चित् प्रव्रजितः, निद्राशीलः प्रकामशः ।
भुक्त्वा पीत्वा सुखं स्वपिति, पापश्रमण इत्युच्यते ॥३॥

आयरियउवज्झाएहिं, सुयं विणयं च गाहिए ।
ते चेव खिसई बाले, पावसमणि त्ति वुच्चई ॥४॥
आचार्योपाध्यायैः, श्रुतं विनयं च ग्राहितः ।
तांश्चैव खिंसति बालः, पापश्रमण इत्युच्यते ॥४॥

आयरियउवज्झायाणं, सम्मं न पडितप्पइ ।
अप्पडिपूयए थद्धे, पावसमणि त्ति वुच्चई ॥५॥
आचार्योपाध्यायानां, सम्यग् न परितृप्यति ।
अप्रतिपूजकः स्तब्धः, पापश्रमण इत्युच्यते ॥५॥

सम्मद्दमाणे पाणाणि, बीयाणि हरियाणि य ।
असंजए संजयमन्नमाणो, पावसमणि त्ति वुच्चई ॥६॥

संमर्दयमानः प्राणिनः, बीजानि हरितानि च।
असंयतः सयतंमन्यमानः, पापश्रमण इत्युच्यते ॥६॥

संथारं फलगं पीढं, निसेज्जं पायकम्बलं।
अप्पमज्जियमारुहइ, पावसमणि त्ति वुच्चई ॥७॥
संस्तारं फलकं पीठं, निषद्यां पादकंबलम्।
अप्रमृज्यारोहति, पापश्रमण इत्युच्यते ॥७॥

दवदवस्स चरई, पमत्ते य अभिक्खणं।
उल्लंघणे य चण्डे य, पावसमणि त्ति वुच्चई ॥८॥
द्रुतं द्रुतं चरति, प्रमत्तश्चाभीक्ष्णम्।
उल्लंघनश्च चण्डश्च, पापश्रमण इत्युच्यते ॥८॥

पडिलेहेइ पमत्ते, अवउज्झइ पायकम्बलं।
पडिलेहा अणाउत्ते, पावसमणि त्ति वुच्चई ॥९॥
प्रतिलेखयति प्रमत्तः, अपोज्झति पादकम्बलम्।
प्रतिलेखनायामनायुक्तः, पापश्रमण इत्युच्यते ॥९॥

पडिलेहेइ पमत्ते, से किंचि हु निसामिया।
गुरुपारिभावए निच्चं, पावसमणि त्ति वुच्चई ॥१०॥
प्रतिलेखयति प्रमत्तः, स किञ्चित्खलु निशम्य।
गुरुपरिभावको नित्यं, पापश्रमण इत्युच्यते ॥१०॥

वहुमाई पमुहरे, थद्धे लुद्धे अणिग्गहे।
असंविभागी अवियत्ते, पावसमणि त्ति वुच्चई ॥११॥
वहुमायी प्रमुखरः, स्तब्धो लुब्धोऽनिग्रहः।
असंविभाग्यप्रीतिकः, पापश्रमण इत्युच्यते ॥११॥

विवादं च उदीरेइ, अहम्मे अत्तपन्नहा।
वुग्गहे कलहे रत्ते, पावसमणि त्ति वुच्चई ॥१२॥

विवादं चोदीरयति, अधर्मं आत्मप्रज्ञाहा ।
व्युद्ग्रहे कलहे रक्तः, पापश्रमण इत्युच्यते ॥१२॥
अथिरासणे कुकुइए, जत्थ तत्थ निसीयई ।
आसणम्मि अणाउत्ते, पावसमणि त्ति वुच्चई ॥१३॥
अस्थिरासनः [1]कुत्कुचः, यत्र तत्र निषीदति ।
आसनेऽनायुक्तः, पापश्रमण इत्युच्यते ॥१३॥
ससरक्खपाए सुवई, सेज्जं न पडिलेहइ ।
संथारए अणाउत्ते, पावसमणि त्ति वुच्चई ॥१४॥
सरजस्कपादः स्वपिति, शय्यां न प्रतिलेखयति
संस्तारकेऽनायुक्तः, पापश्रमण इत्युच्यते ॥१४॥
दुद्धदहीविगईओ, आहारेई अभिक्खणं ।
अरए य तवोकम्मे, पावसमणि त्ति वुच्चई ॥१५॥
दुग्धदधिविकृती आहारयत्यभीक्ष्णम् ।
अरतश्च तपःकर्मणि, पापश्रमण इत्युच्यते ॥१५॥
अत्थन्तम्मि य सूरम्मि, आहारेई अभिक्खणं ।
चोइओ पडिचोएइ, पावसमणि त्ति वुच्चई ॥१६॥
अस्तमयति च सूर्ये, आहारयत्यभीक्ष्णम् ।
नोदितः प्रतिनोदयति, पापश्रमण इत्युच्यते ॥१६॥
आयरियपरिच्चाई, परपासण्डसेवए ।
गाणंगणिए दुब्भूए, पावसमणि त्ति वुच्चई ॥१७॥
आचार्यपरित्यागी, परपाषण्डसेवकः ।
[2]गाणंगणिको दुर्भूतः पापश्रमण इत्युच्यते ॥१७॥
सयं गेहं परिच्चज्ज, परगेहंसि वावरे ।
निमित्तेण य ववहरइ, पावसमणि त्ति वुच्चई ॥१८॥

१ हास्यविकथा करनार. २ छ छ मासे एक सम्प्रदायमांथी बीजे एम बदल्या करे.

स्वकीयं गृहं परित्यज्य, परगृहे व्याप्रियते ।
निमित्तेन व्यवहरति, पापश्रमण इत्युच्यते ॥१८॥

सन्नाइपिण्डं जेमेइ, नेच्छई सामुदाणियं ।
गिहिनिसेज्जं च वाहेइ, पावसमणि त्ति वुच्चई ॥१९॥

स्वज्ञातिपिण्डं भुङ्क्ते, नेच्छति समुदानिकम् ।
गृहिनिषद्यां च वाहयति, पापश्रमण इत्युच्यते ॥१९॥

एयारिसे पंचकुसीलसंवुडे, रूवंधरे मुणिपवराण हेट्ठिमे ।
अयंसि लोए विसमेव गरहिए, न से इहं नेव परत्थ लोए ॥२०॥

एतादृशः पञ्चकुशीलसंवृतः, रूपधरो मुनिप्रवराणामधोवर्ती ।
अस्मिँल्लोके विषमिव गर्हितः, न स इह नैव परत्रलोके ॥२०॥

जे वज्जए एए सया उ दोसे, से सुव्वए होइ मुणीण मज्झे ।
अयंसि लोए अमयं व पूइए, आराहए लोगमिणं तहा परं ॥२१॥

यो वर्जयेदेतान्सदा तु दोषान्, स सुव्रतो भवति मुनीनां मध्ये।
अस्मिँल्लोकेऽमृतमिव पूजितः, आराधयति लोकमिमं तथा परम्

॥ त्ति बेमि ॥ इति पावसमणिज्जं सत्तदहं अज्झयणं समत्तं ॥१७॥
इति पापश्रमणीयं सप्तदशमध्ययनं समाप्तं ॥१७॥

---

॥ अथ संजइज्जं अट्ठारहमं अज्झयणं ॥

॥ अथसंयतीयमष्टादशमध्ययनं ॥

कम्पिल्ले नयरे राया, उदिण्णबलवाहणे ।
नामेणं संजए नामं, मिगव्वं उवणिग्गए ॥१॥

काम्पील्ये नगरे राजा, उदीर्णबलवाहनः ।
नाम्ना संजयो नाम, मृगव्यामुपनिर्गतः ॥१॥

हयाणीए गयाणीए, रहाणीए तहेव य ।
पायत्ताणीए महया, सव्वओ परिवारिए ॥२॥

हयानीकेन गजानीकेन, रथानोकेन तथैव च ।
पदात्यनीकेन महता, सर्वतः परिवारितः ॥२॥

मिए छुहित्ता हयगओ, कम्पिल्लुज्जाण केसरे ।
भीए सन्ते मिए तत्थ, वहेइ रसमुच्छिए ॥३॥

मृगान्क्षिप्त्वा हयगतः, काम्पिल्यकेसरोद्याने ।
भीतान् श्रान्तान् मृगान् तत्र, विध्यति रसमूर्च्छितः ॥३॥

अह केसरम्मि उज्जाणे, अणगारे तवोघणे ।
सज्झायज्झाणसंजुत्ते धम्मज्झाणं झियायइ ॥४॥

अथ केसर उद्याने, अनगारस्तपोधनः ।
स्वाध्यायध्यानसंयुक्तः, धर्मध्यानं ध्यायति ॥४॥

अप्फोवमण्डवम्मि, झायई क्खवियासवे ।
तस्सागए मिगे पासं, वहेइ से नराहिवे ॥५॥

[1]अफोवमण्डपे, ध्यायति क्षपितास्रवः ।
तस्यागतान्मृगान् पार्श्वं, (हन्ति)विध्यति स नराधिपः ॥५॥

अह आसगओ राया, खिप्पमागम्म सो तहिं ।
हए मिए उ पासित्ता, अणगारं तत्थ पासई ॥६॥

अथाश्वगतो राजा, क्षिप्रमागम्य स तस्मिन् (तत्र) ।
हतान्मृगान्तु दृष्ट्वा, अनगारं तत्र पश्यति ॥६॥

अह राया तत्थ संभन्तो, अणगारो मणाहओ ।
मए उ मन्दपुण्णेणं, रसगिद्धेण घित्तुणा ॥७॥

अथ राजा तत्र संभ्रान्तः, अनगारो मनाग् हतः ।
मया तु मन्दपुण्येन, रसगृध्नेन घातुकेन ॥७॥

आसं विसज्जइत्ताणं, अणगारस्स सो निवो ।
विणएण वन्दए पाए, भगवं एत्थ मे खमे ॥८॥

१ वाचना माडवा नीचे.

अश्वं विसृज्य, अनगारस्य स-नृपः ।
विनयेन वन्दते पादौ, भगवन्नत्र मे (अपराधं) क्षमस्व ॥८॥
अह मोणेण सो भगवं, अणगारे झाणमस्सिए ।
रायाणं न पडिमन्तेइ, तओ राया भयद्दुओ ॥९॥
अथ मौनेन स भगवान्, अनगारो ध्यानमाश्रितः ।
राजानं न प्रतिमंत्रयते, ततो राजा भयद्रुतः ॥९॥
संजओ अहमम्मीति, भगवं वाहराहि मे ।
कुद्धे तेएण अणगारे, डहेज्ज नरकोडिओ ॥१०॥
संजयोऽहमस्मीति, भगवन् व्याहर मां ।
क्रुद्धस्तेजसाऽनगारः, दहेत नरकोटीः ॥१०॥
अभओ पत्थिवा तुब्भं, अभयदाया भवाहि य ।
अणिच्चे जीवलोगम्मि, किं हिंसाए पसज्जसी ॥११॥
अभयं पार्थिव ! तव, अभयदाता भव च ।
अनित्ये जीवलोके, किं हिंसायां प्रसजसि ॥११॥
जया सव्वं परिच्चज्ज, गन्तव्वमवसस्स ते ।
अणिच्चे जीवलोगम्मि, किं रज्जम्मि पसज्जसी ॥१२॥
यदा सर्वं परित्यज्य, गन्तव्यमवशस्य ते ।
अनित्ये जीवलोके, किं राज्ये प्रसजसि ॥१२॥
जीवियं चेव रूवं च, विज्जुसंपायचंचलं ।
जत्थ तं मुज्झसी रायं, पेच्चत्थं नावबुज्झसे ॥१३॥
जीवितं चैव रूपं च, विद्युत्संपातचंचलम् ।
यत्र त्वं मुह्यसि राजन्, [1]प्रेत्यार्थं नावबुध्यसे ॥१३॥
दाराणि य सुया चेव, मित्ता य तह बन्धवा ।
जीवन्तमणुजीवन्ति, मयं नाणुव्वयन्ति य ॥१४॥

१ परलोक माटे.

दाराश्च सुताश्चैव, मित्राणि च तथा बान्धवाः ।
जीवन्तमनुजीवन्ति, मृतं नानुव्रजन्ति च ॥१४॥

नीहरन्ति मयं पुत्ता, पितरं परमदुक्खिया ।
पितरो वि तहा पुत्ते, बन्धू रायं तवं चरे ॥१५॥
निःसारयन्ति मृतं पुत्राः, पितरं परमदुःखिताः ।
पितरोऽपि तथा पुत्रान् , बन्धवो राजन्! तपश्चरेः ॥१५॥

तओ तेणज्जिए दव्वे, दारे य परिरक्खिए ।
कीलन्तिऽन्ने नरा रायं, हट्ठतुट्ठमलंकिया ॥१६॥
ततस्तेनार्जिते द्रव्ये, दारेषु च परिरक्षितेषु ।
क्रीडन्त्यन्ये नरा राजन् , हृष्टतुष्टाऽलंकृताः ॥१६॥

तेणावि जं कयं कम्मं, सुहं वा जइ वा दुहं ।
कम्मुणा तेण संजुत्तो, गच्छई उ परं भवं ॥१७॥
तेनापि यत्कृतं कर्म, शुभं वा यदि वाऽशुभम् ।
कर्मणा तेन संयुक्तः, गच्छति तु परभवम् ॥१७॥

सोऊण तस्स सो धम्मं, अणगारस्स अन्तिए ।
महया संवेगनिव्वेदं, समावन्नो नराहिवो ॥१८॥
श्रुत्वा तस्य स धर्मं, अनगारस्यान्तिके ।
महान्तं संवेगनिर्वेदं, समापन्नो नराधिपः ॥१८॥

संजओ चइउं रज्जं, निक्खन्तो जिणसासणे ।
गद्दभालिस्स भगवओ, अणगारस्स अन्तिए ॥१९॥
संजयस्त्यक्त्वा राज्यं, निष्क्रान्तो जिनशासने ।
गर्दभालेर्भगवतः, अनगारस्यान्तिके ॥१९॥

चिच्चा रट्ठं पव्वइए, खत्तिए परिभासइ ।
जहा ते दीसई रूवं, पसन्नं ते तहा मणो ॥२०॥

त्यक्त्वा राष्ट्रं प्रव्रजितः, क्षत्रियः परिभाषते ।
यथा ते दृश्यते रूपं, प्रसन्नं ते तथा मनः ॥२०॥

किंनामे किंगोत्ते, कस्सट्ठाए व माहणे ।
कहं पडियरसी बुद्धे, कहं विणीए त्ति वुच्चसी ॥२१॥
किं नाम किं गोत्रम् , कस्यार्थं वा माहनः ।
कथं प्रतिचरसि बुद्धान् , कथं विनीत इत्युच्यसे ॥२१॥

संजओ नाम नामेणं, तहा गोत्तेण गोयमो ।
गद्दभाली ममायरिया, विज्जाचरणपारगा ॥२२॥
संयतोनाम नाम्ना, तथा गोत्रेण गौतमः ।
गर्दभालयो ममाचार्याः, विद्याचरणपारगाः ॥२२॥

किरियं अकिरियं विणयं, अन्नाणं च महामुणी ।
एएहिं चउहि ठाणेहिं, मेयन्ने किं पभासई ॥२३॥
क्रियामक्रियां विनयः, अज्ञानं च महामुने ।
एतेषु चतुःषु स्थानेषु, तत्वज्ञाः किं प्रभाषन्ते ॥२३॥

इइ पाउकरे बुद्धे, नायए परिणिव्वुए ।
विज्जाचरण संपन्ने, सच्चे सच्चपरक्कमे ॥२४॥
इति प्रादुःकरोति बुद्धः, ज्ञातकः परिनिवृतः ।
विद्याचारित्रसंपन्नः, सत्यवान् सत्यपराक्रमः ॥२४॥

पडन्ति नरए घोरे, जे नरा पावकारिणो ।
दिव्वं च गइं गच्छन्ति, चरित्ता धम्ममारियं ॥२५॥
पतन्ति नरके घोरे, ये नराः पापकारिणः ।
दिव्यां च गतिं गच्छंति, चरित्वा धर्ममार्यम् ॥२५॥

मायावुइयमेयं तु, मुसाभासा निरत्थिया ।
संजममाणोऽवि अहं, वसामि इरियामि य ॥२६॥
मायोदितमेतत्तु, मृषाभाषा निरर्थिका ।
संयच्छन्नप्यहम् , वसामि ईर्यायां च ॥२६॥
सव्वेए विइया मज्झं, मिच्छादिट्ठी अणारिया ।
विज्जमाणे परे लोए, सम्मं जाणामि अप्पयं ॥२७॥
सर्वएते विदिता मया, मिथ्यादृष्टयोऽनार्याः ।
विद्यमाने परेलोके, सम्यग् जानाम्यात्मानम् ॥२७॥
अहमासि महापाणे, जुइमं वरिससओवमे ।
जा सा पालिमहापाली, दिव्वा वरिससओवमा ॥२८॥
अहमासम् [1]महाप्राणे, द्युतिमान् वर्षशतोपमः ।
या सा [2]पालि महा[3]पालिः, दिव्या वर्षशतोपमा ॥२९॥
से चुए बम्भलोगाओ, माणुसं भवमागए ।
अप्पणो य परेसिं च, आउं जाणे जहा तहा ॥२९॥
स च्युतो ब्रह्मलोकात् , मानुष्यं भवमागतः ।
आत्मनश्च परेषां च, आयुर्जानामि यथा तथाः ॥२९॥
नाणारुइं च छन्दं च, परिवज्जेज्ज संजए ।
अणट्ठा जे य सव्वत्था, इइ विज्जामणुसंचरे ॥३०॥
ननारुचिं च छन्दश्च, परिवर्जयेत् संयतः ।
अनर्था ये च सर्वार्थाः, इति विद्यामनुसंचरेः ॥३०॥
पडिक्कमामि पसिणाणं, परमंतेहिं वा पुणो ।
अहो उट्ठिए अहोरायं, इइ विज्जा तवं चरे ॥३१॥
प्रतिक्रमामि प्रश्नेभ्यः, परमंत्रेभ्यो वा पुनः ।
अहो उत्थितोऽहोरात्रं, इति विद्वान् तपश्चरेत् ॥३१॥

---

१ विमाननुं नाम छे २ काल प्रमाण ३ मोटु काल प्रमाण

जं च मे पुच्छसी काले, सम्मं सुद्धेण चेयसा ।
ताइं पाउकरे बुद्धे, तं नाणं जिणसासणे ॥३२॥

यच्च मां पृच्छसि काले, सम्यक् शुद्धेन चेतसा ।
तत्प्रादुरकरोद्‌बुद्धः, तज्ज्ञानं जिनशासने ॥३२॥

किरियं च रोयई धीरे, अकिरियं परिवज्जए ।
दिट्ठीए दिट्ठीसम्पन्ने, धम्मं चर सुदुच्चरं ॥३३॥

क्रियां च रोचयेद् धीरः, अक्रियां परिवर्जयेत् ।
दृष्ट्या दृष्टिसंपन्नः, धर्मं चर सुदुश्चरम् ॥३३॥

एयं पुण्णपयं सोच्चा, अत्थधम्मोवसोहियं ।
भरहो वि भारहं वासं, चिच्चा कामाइ पव्वए ॥३४॥

एतत्पुण्यपदं श्रुत्वा, अर्थधर्मोपशोभितम् ।
भरतोऽपि भारतं वर्षं, त्यक्त्वा कामान् प्राव्राजीत् ॥३४॥

सगरो वि सागरन्तं, भरहवासं नराहिवो ।
इस्सरियं केवलं हिच्चा, दयाइ परिनिव्वुडे ॥३५॥

सगरोऽपि सागरान्तं, भरतवर्षं नराधिपः ।
ऐश्वर्यं केवलं त्यक्त्वा, दयया (संयमेन) परिनिवृतः ॥३५॥

चइत्ता भारहं वासं, चक्कवट्टी महड्ढिओ ।
पव्वज्जमब्भुवगओ, मघवं नाम महाजसो ॥३६॥

त्यक्त्वा भारतं वर्षं, चक्रवर्ती महर्द्धिकः ।
प्रव्रज्यामभ्युपगतः, मघवा नाम महायशाः ॥३६॥

सणंकुमारो मणुस्सिन्दो, चक्कवट्टी महड्ढिओ ।
पुत्तं रज्जे ठवेऊणं, सो वि राया तवं चरे ॥३७॥

सनत्कुमारो मनुष्येंद्रः, चक्रवर्ती महर्द्धिकः ।
पुत्रं राज्ये स्थापयित्वा, सोऽपिराजा तपोऽचरत् ॥३७॥

चइत्ता भारहं वासं, चक्कवट्टी महड्ढिओ ।
सन्ती सन्तिकरे लोए, पत्तो गइमणुत्तरं ॥३८॥
त्यक्त्वा भारतं वर्षं, चक्रवर्ती महर्द्धिकः ।
शान्तिः शान्तिकरो लोके, प्राप्तो गतिमनुत्तराम् ॥३८॥
इक्खागरायवसभो, कुन्थू नाम नरीसरो ।
विक्खायकित्ती भगवं, पत्तो गइमणुत्तरं ॥३९॥
इक्ष्वाकुराजवृषभः, कुन्थुनामा नरेश्वरः ।
विख्यातकीर्तिर्भगवान्, प्राप्तो गतिमनुत्तराम् ॥३९॥
सागरन्तं चइत्ताणं, भरहं नरवरीसरो ।
अरो य अरयं पत्तो, पत्तो गइमणुत्तरं ॥४०॥
सागरान्तं त्यक्त्वा, भारतं नरवरेश्वरः ।
अरश्चारजः प्राप्तो, प्राप्तो गतिमनुत्तराम् ॥४०॥
चइत्ता भारहं वासं, चइत्ता बलवाहणं ।
चइत्ता उत्तमे भोए, महापउमे तवं चरे ॥४१॥
त्यक्त्वा भारतं वर्षं, त्यक्त्वा बलवाहनम् ।
त्यक्त्वोत्तमान् भोगान्, महापद्मस्तपोऽचरत् ॥४१॥
एगच्छत्तं पसाहित्ता, महिं माणनिसूरणो ।
हरिसेणो मणुस्सिन्दो, पत्तो गइमणुत्तरं ॥४२॥
एकच्छत्रां प्रसाध्य, महीं माननिषूदनः (मर्दक) ।
हरिषेणो मनुष्येन्द्रः, प्राप्तो गतिमनुत्तराम् ॥४२॥
अन्निओ रायसहस्सेहिं, सुपरिच्चाई दमं चरे ।
जयनामो जिणक्खायं, पत्तो गइमणुत्तरं ॥४३॥
अन्वितो राजसहस्रैः, सुपरित्यागी दममचारीत् ।
जयनामा जिनाख्यातां प्राप्तो गतिमनुत्तराम् ॥४३॥

दसण्णरज्जं मुदियं, चइत्ताणं मुणी चरे ।
दसण्णभद्दो निक्खन्तो, सक्खं सक्केण चोइओ ॥४४॥

दशार्णराज्यं मुदितं, त्यक्त्वा मुनिरचरत् ।
दशार्णभद्रो निःक्रान्तः, साक्षाच्छक्रेण नोदितः ॥४४॥

नमी नमेइ अप्पाणं, सक्खं सक्केण चोइओ ।
चइऊण गेहं वइदेही, सामण्णे पज्जुवट्ठिओ ॥४५॥

नमिर्नामयत्यात्मानं, साक्षाच्छक्रेण नोदितः ।
त्यक्त्वा गृहं वैदेही, श्रामण्ये पर्युपस्थितः ॥४५॥

करकण्डू कलिंगेसु, पंचालेसु य दुम्मुहो ।
नमी राया विदेहेसु, गन्धारेसु य नग्गई ॥४६॥

करकण्डुः कलिंगेषु, पंचालेषु च द्विमुखः
नमीराजा विदेहेषु, गन्धारेषु च निर्गतिः ॥४६॥

एए नरिन्दवसभा, निक्खन्ता जिणसासणे ।
पुत्ते रज्जे ठवेऊणं, सामण्णे पज्जुवट्ठिया ॥४७॥

एते नरेन्द्रवृषभाः, निःक्रान्ता जिनशासने ।
पुत्रान् राज्ये स्थापयित्वा, श्रामण्ये पर्युपस्थिताः ॥४७॥

सोवीररायवसभो, चइत्ताण मुणी चरे ।
उद्दायणो पव्वइओ, पत्तो गइमणुत्तरं ॥४८॥

सौवीरराजवृषभः, त्यक्त्वा मुनिरचरत् ।
उदायनः प्रव्रजितः, प्राप्तो गतिमनुत्तराम् ॥४८॥

तहेव कासीराया, सेओसच्चपरक्कमे ।
कामभोगे परिच्चज्ज, पहणे कम्ममहावणं ॥४९॥

तथैव काशीराजः, श्रेयःसत्यपराक्रमः ।
कामभोगान् परित्यज्य, प्राहन् कर्ममहावनम् ॥४९॥

तहेव विजओ राया, अणट्ठाकित्ति पव्वए ।
रज्जं तु गुणसमिद्धं, पयहित्तु महाजसो ॥५०॥
तथैव विजयो राजा, आनष्टाकीर्तिः प्राव्राजीत् ।
राज्यं गुणसमृध्धं, प्रहाय महायशाः ॥५०॥

तहेवुग्गं तवं किच्चा, अव्वक्खित्तेण चेयसा ।
महब्बलो रायरिसी, आदाय सिरसा सिरिं ॥५१॥
तथैवोग्रं तपःकृत्वा, अव्याक्षिप्तेन चेतसा ।
महाबलो राजर्षिः, आदाय शिरसा श्रियम् ॥५१॥

कहं धीरो अहेऊहिं, उम्मत्तो व महिं चरे ।
एए विसेसमादाय, सूरा दढपरक्कमा ॥५२॥
कथं धीरोऽहेतुभिः, उन्मत्त इव मही चरेत् ।
एते विशेषमादाय, शूरा दृढपराक्रमाः ॥५२॥

अच्चन्तनियाणखमा, सच्चा मे भासिया वई ।
अतरिंसु तरन्तेगे तरिस्सन्ति अणागया ॥५३॥
अत्यन्तनिदानक्षमाः, सत्या मया भाषिता वाक् ।
अतारीषुस्तरन्त्येके, तरिष्यन्त्यनागताः ॥५३॥

कहं धीरे अहेऊहिं, अत्ताणं परियावसे ।
सव्वसंगविनिम्मुक्के, सिद्धे भवइ नीरए ॥५४॥
कथ धीरोऽहेतुभिः आत्मानं पर्यावासयेत् ? ।
सर्वसंगविनिर्मुक्तः, सिद्धो भवति निरजाः ॥५४॥

॥ त्ति बेमि ॥ इति संजइज्जं समत्तं ॥१८॥
इति ब्रवीमि—इति संयतीयं समाप्तं ॥१८॥

## ॥ मियापुत्तीयं एगूणवीसइमं अज्झयणं ॥

### ॥ मृगापुत्रीयमेकोनविंशतितममध्ययनं ॥

सुग्गीवे नयरे रम्मे, काणणुज्जाणसोहिए ।
राया बलभद्दि त्ति, मिया तस्सग्गमाहिसी ॥१॥

सुग्रीवे नगरे रम्ये, काननोद्यानशोभिते ।
राजा बलभद्र इति, मृगा तस्याग्रमहिषी ॥१॥

तेसिं पुत्ते बलसिरी, मियापुत्ते त्ति विस्सुए ।
अम्मापिऊण दइए, जुवराया दमीसरे ॥२॥

तयोः पुत्रो बलश्रीः, मृगापुत्र इति विश्रुतः ।
अम्बापित्रोर्दयितः, युवराजो दमीश्वरः ॥२॥

नन्दणे सो उ पासाए, कीलए सह इत्थिहि ।
देवे दोगुन्दगे चेव, निच्चं मुइयमाणसो ॥३॥

नन्दने स तु प्रासादे, क्रीडति सह स्त्रीभिः ।
देवो दोगुन्दकश्चैव, नित्यं मुदितमानसः ।

मणिरयणकोट्टिमतले, पासायालोयणट्ठिओ ।
आलोएइ नगरस्स, चउक्कत्तियचच्चरे ॥४॥

मणिरत्नकुट्टिमतले, प्रासादालोकनस्थितः ।
आलोकयति नगरस्य, चतुष्कत्रिकचत्वरान् ॥४॥

अह तत्थ अइच्छन्तं, पासइ समणसंजयं ।
तवनियमसंजमधरं, सीलड्ढं गुणआगरं ॥५॥

अथ तत्रातिक्रामन्तं, पश्यति संयतश्रमणं ।
तपोनियमसंयमधरं, शीलाढ्यं गुणाकरम् ॥५॥

तं देहई मियापुत्ते, दिट्ठीए अणिमिसाए उ ।
कहिं मन्नेरिसं रूवं, दिट्ठपुव्वं मए पुरा ॥६॥

तं पश्यति मृगापुत्रः, दृष्टयाऽनिमेषया तु ।
क्व मन्य ईदृशं रूपं, दृष्टपूर्व मया पुरा ॥६॥

साहुस्स दरिसणे तस्स, अज्झवसाणम्मि सोहणे ।
मोहं गयस्स सन्तस्स, जाईसरणं समुप्पन्नं ॥७॥
साधोर्दर्शने तस्य, अध्यवसाने शोभने ।
गतमोहस्य सतः, जातिस्मरणं समुत्पन्नम् ॥७॥

जाईसरणे समुप्पन्ने, मियापुत्ते महिड्ढिए ।
सरई पोराणियं जाई, सामण्णं च पुरा कयं ॥८॥
जातिस्मरणे समुत्पन्ने, मृगापुत्रो महर्द्धिकः ।
स्मरति पौराणिकीं जातिं, श्रामण्यं च पुराकृतम् ॥८॥

विसएहि अरज्जन्तो, रज्जन्तो संजमम्मि य ।
अम्मापियरमुवागम्म, इमं वयणमब्बवी ॥९॥
विषयेष्वरज्यन्, रज्यन् संयमे च ।
अंबापितरावुपागम्य, इदं वचनमब्रवीत् ॥९॥

सुयाणि मे पंच महव्वयाणि, नरएसु दुक्खं च तिरिक्खजोणिसु ।
निव्विण्णकामो मि महण्णवाओ, अणुजाणह पव्वइस्सामि अम्मो ॥
श्रुतानि मया पंचमहाव्रतानि, नरकेषु दुःखं च तिर्यग्योनिषु ।
निर्विण्णकामोऽस्मि महार्णवात्, अनुजानीत प्रव्रजिष्यामि पितरौ?

अम्म ताय मए भोगा, भुत्ता विसफलोवमा ।
पच्छा कडुयविवागा, अणुबन्धदुहावहा ॥११॥
मात स्तात मया भोगाः, भुक्ता विषफलोपमा. ।
पश्चात् कटुकविपाकाः, अनुबन्धदुःखावहाः ॥११॥

इमं सरीरं अणिच्चं, असुइं असुइसंभवं ।
असासयावासमिणं, दुक्खकेसाण भायणं ॥१२॥

इदं शरीरमनित्यं, अशुच्यशुचिसंभवं।
अशाश्वतावासमिदं, दुःखक्लेशानां भाजनम् ॥१२॥

असासए सरीरम्मि, रइं नोवलभामहं।
पच्छा पुरा व चइयव्वे, फेणबुब्बुयसन्निभे ॥१३॥
अशाश्वते शरीरे, रतिं नोपलभेऽहम्।
पश्चात् पुरा वा त्यक्तव्ये, फेनबुद्बुदसंनिभे ॥१३॥

माणुसत्ते असारम्मि, वाहीरोगाण आलए।
जरामरणघत्थम्मि, खणंपि न रमामहं ॥१४॥
मनुष्यत्व असारे, व्याधिरोगाणामालये।
जरामरणग्रस्ते, क्षणमपि न रमेऽहम् ॥१४॥

जम्मं दुक्खं जरा दुक्खं, रोगाणि मरणाणि य।
अहो दुक्खो हु संसारो, जत्थ कीसन्ति जन्तवो ॥१५॥
जन्म दुःखं जरादुःखं, रोगाश्च मरणानि च।
अहो दुःखः खलु संसारः, यत्र क्लिश्यन्ति जन्तवः ॥१५॥

खेत्तं वत्थुं हिरण्णं च, पुत्तदारं च बन्धवा।
चइत्ताणं इमं देहं, गन्तव्वमवसस्स मे ॥१६॥
क्षेत्रं वास्तु हिरण्यं च, पुत्रदारं च बान्धवान्।
त्यक्त्वेमं देहं, गन्तव्यमवशस्य मे. ॥१६॥

जहा किम्पागफलाण, परिणामो न सुन्दरो।
एवं भुत्ताण भोगाणं, परिणामो न सुन्दरो ॥१७॥
यथा किंपाकफलानां, परिणामो न सुन्दरः।
एवं भुक्तानां भोगानां, परिणामो न सुन्दरः ॥१७॥

अद्धाणं जो महंतं तु, अप्पाहेओ पवज्जई।
गच्छन्तो सो दुही होइ, छुहातण्हाए पीडिओ ॥१८॥

अध्वानं यो महान्तं तु, अपाथेयः प्रव्रजति ।
गच्छन् स दुःखी भवति, क्षुधातृष्णया पीडितः ॥१८॥
एवं धम्मं अकाऊणं, जो गच्छइ परं भवं ।
गच्छन्तो सो दुही होइ, वाहीरोगेहिं पीडिओ ॥१९॥
एवं धर्ममकृत्वा, यो गच्छति पर भवम् ।
गच्छन् स दुःखी भवति, व्याधिरोगैः पीडितः ॥१९॥
अद्धाणं जो महंतं तु, सपाहेओ पवज्जई ।
गच्छन्तो सो सुही होइ, छुहातण्हाविवज्जिओ ॥२०॥
अध्वानं यो महान्तं तु, सपाथेयः प्रव्रजति ।
गच्छन् स सुखी भवति, क्षुधातृष्णाविवर्जितः ॥२०॥
एवं धम्मं पि काऊणं, जो गच्छइ परं भवं ।
गच्छन्तो सो सुही होइ, अप्पकम्मे अवेयणे ॥२१॥
एवं धर्ममपि कृत्वा, यो गच्छति परं भवम् ।
गच्छन् स सुखी भवति, अल्पकर्माऽवेदनः ॥२१॥
जहा गेहे पलित्तम्मि, तस्स गेहस्स जो पहू ।
सारभण्डाणि नीणेइ, असारं अवउज्झइ ॥२२॥
यथा गृहे प्रदीप्ते, तस्य गृहस्य यः प्रभुः ।
सारभाण्डानि निःकाशयति, असारमपोज्झति ॥२२॥
एवं लोए पलित्तम्मि, जराए मरणेण य ।
अप्पाणं तारइस्सामि, तुब्भेहिं अणुमन्निओ ॥२३॥
एवं लोके प्रदीप्ते, जरया मरणेन च ।
आत्मानं तारयिष्यामि, युष्माभ्यामनुमतः ॥२३॥
तं बिन्तम्मापियरो, सामण्णं पुत्त दुच्चरं ।
गुणाणं तु सहस्साइं, धारेयव्वाइं भिक्खुणो ॥२४॥

तं ब्रूतोऽम्बापितरौ, श्रामण्यं पुत्र दुश्चरम् ।
गुणानां तु सहस्राणि, धारयितव्यानि भिक्षोः ॥२४॥

समया सव्वभूएसु, सत्तुमित्तेसु वा जगे ।
पाणाइवायविरई, जावज्जीवाए दुक्करं ॥२५॥

समता सर्वभूतेषु, शत्रुमित्रेषु वा जगति ।
प्राणातिपातविरतिः, यावज्जीवं दुष्करा ॥२५॥

निच्चकालप्पमत्तेणं, मुसावायविवज्जणं ।
भासियव्वं हियं सच्चं, निच्चाउत्तेण दुक्करं ॥२६॥

नित्यकालाप्रमत्तेन, मृषावादविवर्जनम् ।
भाषितव्यं हितं सत्यं, नित्यायुक्तेन दुष्करं ॥२६॥

दन्तसोहणमाइस्स, अदत्तस्स विवज्जणं ।
अणवज्जेसणिज्जस्स, गिण्हणा अवि दुक्करं ॥२७॥

दन्तशोधनादेः, अदत्तस्य विवर्जनम् ।
अनवद्यैषणीयस्य, ग्रहणमपि दुःकरम् ॥२७॥

विरई अबम्भचेरस्स, कामभोगरसन्नुणा ।
उग्गं महव्वयं बम्भं, धारेयव्वं सुदुक्करं ॥२८॥

विरतिरब्रह्मचर्यस्य, कामभोगरसज्ञेन ।
उग्रं महाव्रतं ब्रह्मचर्यं, धारयितव्यं सुदुःकरम् ॥२८॥

धणधन्नपेसवग्गेसु, परिग्गहविवज्जणं ।
सव्वारम्भपरिच्चाओ, निम्ममत्तं सुदुक्करं ॥२९॥

धनधान्यप्रेष्यवर्गेषु, परिग्रहविवर्जनम् ।
सर्वारंभपरित्यागः, निर्ममत्वं सुदुःकरम् ॥२९॥

चउव्विहे वि आहारे, राईभोयणवज्जणा ।
सन्निहीसंचओ चेव, वज्जेयव्वो सुदुक्करं ॥३०॥

चतुर्विधेऽप्याहारे, रात्रिभोजनवर्जना ।
सन्निधिसंचयश्चैव, वर्जितव्यः सुदुष्करः ॥३०॥
छुहा तण्हा य सीउण्हं, दंसमसगवेयणा ।
अक्कोसा दुक्खसेज्जा य, तणफासा जल्लमेव य ॥३१॥
क्षुधा तृषा च शीतोष्णं, दंशमशकवेदना ।
आक्रोशा दुःखशय्या च, तृणस्पर्शा [1]जल्लमेव च ॥३१॥
तालणा तज्जणा चेव, वहबन्धपरीसहा ।
दुक्खं भिक्खायरिया, जायणा य अलाभया ॥३२॥
ताडना तर्जना चैव, वधबन्धौ परिषहौ ।
दुःखं भिक्षाचर्यायाः, याचना चालाभता ॥३२॥
कावोया जा इमा वित्ती, केसलोओ य दारुणो ।
दुक्खं बम्भव्वयं घोरं, धारेउं य महप्पणो ॥३३॥
कापोती येयं वृत्तिः, केशलोचश्च दारुणः ।
दुःखं ब्रह्मव्रतं घोरं, धर्तुं च महात्मना ॥३३॥
सुहोइओ तुमं पुत्ता, सुकुमालो सुमज्जिओ ।
न हु सी पभू तुमं पुत्ता, सामण्णमणुपालिया ॥३४॥
सुखोचितस्त्वं पुत्र !, सुकुमारश्च सुमज्जितः ।
न खल्वसि प्रभुस्त्वं पुत्र !, श्रामण्यमनुपालयितुम् ॥३४॥
जावज्जीवमविस्सामो, गुणाणं तु महब्भरो ।
गुरुओ लोहभारु व्व, जो पुत्ता होइ दुव्वहो ॥३५॥
यावज्जीवमविश्रामः, गुणानां तु महाभारः ।
गुरुको लोहभार इव, यः पुत्र ! भवति दुर्वहः ॥३५॥
आगासे गंगसोउ व्व, पडिसोउ व्व दुत्तरो ।
वाहाहिं सागरो चेव, तरियव्वो गुणोदही ॥३६॥

1 मल.

आकाशे गंगास्रोत इव, प्रतिस्रोतोवद् दुस्तरः।
बाहुभ्यां सागरश्चैव, तरितव्यो गुणोदधिः ॥३६॥

वालुयाकवलो चेव, निरस्साए उ संजमे।
असिधारागमणं चेव, दुक्करं चरिउं तवो ॥३७॥
वालुकाकवलश्चैव, निःस्वादस्तु संयमः।
असिधारागमनं चैव, दुःकरं चरितुं तपः ॥३७॥

अही वेगन्तदिट्ठीए, चरित्ते पुत्त दुक्करे।
जवा लोहमया चेव, चावेयव्वा सुदुक्करं ॥३८॥
अहिरिवैकान्तदृष्ट्याः, चारित्रे पुत्र! दुष्करे।
यवा लोहमयाश्चैव, चर्वयितव्याः सुदुःकराः ॥३८॥

जहा अग्गिसिहा दित्ता, पाउं होइ सुदुक्करा।
तहा दुक्करं करेउं जे, तारूण्णे समणत्तणं ॥३९॥
यथाग्निशिखा दीप्ता, पातुं भवति सुदुःकराः।
तथा दुष्करं कर्तुं यत्, तारुण्ये श्रमणत्वम् ॥३९॥

जहा दुक्खं भरेउं जे, होइ वायस्स कोत्थलो।
तहा दुक्खं करेउं जे, कीवेणं समणत्तणं ॥४०॥
यथा दुःखं भर्तुं यो, भवति वायोः कोस्थलः।
तथा दुःकरं कर्तुं यत्, क्लीवेन श्रामण्यम् ॥४०॥

जहा तुलाए तोलेउं, दुक्करो मन्दरो गिरी।
तहा निहुयं नीसंकं, दुक्करं समणत्तणं ॥४१॥
यथा तुलया तोलयितुं, दुःकरो मन्दरो गिरिः।
तथा निभृतं निशंकं, दुःकरं श्रमणत्वम् ॥४१॥

जहा भुयाहि तरिउं, दुक्करं रयणायरो।
तहा अणुवसन्तेणं, दुक्करं दमसागरो ॥४२॥

यथा भुजाभ्यां तरीतुं, दुःकरो रत्नाकरः ।
तथानुपशान्तेन, दुःकरो दमसागरः ॥४२॥

भुंज माणुस्सए भोगे, पंचलक्खणए तुमं ।
भुत्तभोगी तम्रो जाया, पच्छा धम्मं चरिस्ससि ॥४३॥

भुंद्व मानुष्यकान् भोगान्, पंचलक्षणकान् त्वम् ।
भुक्तभोगी ततो जात ? पश्चाद् धर्म चरिष्यसि ॥४३॥

सो बिंतऽम्मापियरो, एवमेयं जहा फुडं ।
इह लोए निप्पिवासस्स, नत्थि किंचिवि दुक्करं ॥४४॥

स ब्रूतेऽम्बापितरौ, एवमेतद्यथास्फुटम् ।
इहलोके निःपिपासस्य, नास्ति किंचिदपि दुःकरम् ॥४४॥

सारीरमाणसा चेव, वेयणाओ अनन्तसो ।
मए सोढाओ भीमाओ, असइं दुक्खभयाणि य ॥४५॥

शारीरमानस्यश्चैव, वेदना अनन्तशः ।
मया सोढा भीमाः, असकृद् दुःखभयानि च ॥४५॥

जरामरणकान्तारे, चाउरन्ते भयागरे ।
मए सोढाणि भीमाणि, जम्माणि मरणाणि य ॥४६॥

जरामरणकान्तारे, चातुरन्ते भयाकरे ।
मया सोढानि भीमानि, जन्मानि मरणानि च ॥४६॥

जहा इहं अगणी उण्हो, एत्तोऽणन्तगुणो तहिं ।
नरएसु वेयणा उण्हा, अस्साया वेइया मया ॥४७॥

यथेहाग्निरुष्णः, इतोऽनन्तगुणस्तत्र ।
नरकेषु वेदना उष्णाः, असाता वेदिता मया ॥४७॥

जहा इमं इहं सीयं, एत्तोऽणन्तगुणो तहिं ।
नरएसु वेयणा सीया, अस्साया वेइया मए ॥४८॥

यथेदमिह शीतं, इतोऽनंतगुणं तत्र ।
नरकेषु वेदना शीता, असाता वेदिता मया ॥४८॥
कन्दन्तो कंदुकुम्भीसु, उड्ढपाओ अहोसिरो ।
हुयासणे जलन्तम्मि, पक्कपुव्वो अणन्तसो ॥४६॥
क्रन्दन् कन्दुकुंभीषु, उर्ध्वपादोऽधःशिराः ।
हुताशने ज्वलति, पक्कपूर्वोऽनन्तशः ॥४९॥
महादवग्गिसंकासे, मरुम्मि वइरवालुए ।
कलम्बवालुयाए य, दड्ढपुव्वो अणन्तसो ॥५०॥
महादवाग्निसंकाशे, मरौ वज्रवालुकायाम् ।
कदम्बवालुकायां च, दग्धपूर्वोऽनन्तशः ॥५०॥
रसन्तो कन्दुकुम्भीसु, उड्ढं बद्धो अबन्धवो ।
करवत्तकरकयाईहिं, छिन्नपुव्वो अणन्तसो ॥५१॥
रसन् कन्दुकुंभीषु, उर्ध्वबद्धोऽबान्धवः ।
करपत्रक्रकचैः, छिन्नपूर्वोऽनन्तशः ॥५१॥
अइतिक्खकंटगाइण्णे, तुंगे सिम्बलिपायवे ।
खेवियं पासबद्धेणं, कड्ढोकड्ढाहि दुक्करं ॥५२॥
अतितिक्ष्णकण्टकाकीर्णे, तुंगे शिवलिपादपे ।
[1]क्षेपितं पाशबध्वेन, कर्षणापकर्षणैर्दुःकरम् ॥५२॥
महाजन्तेसु उच्छू वा, आरसन्तो सुभेरवं ।
पीडिओ मि सकम्मेहिं, पावकम्मो अणन्तसो ॥५३॥
महायंत्रेष्विक्षुरिव, आरसन्सुभैरवम् ।
पीडीतोऽस्मि स्वकर्मभिः, पापकर्माऽनन्तशः ॥५३॥
कूवन्तो कोलसुणएहिं, सामेहिं सबलेहि य ।
फाडिओ फालिओ छिन्नो, विप्फुरन्तो अणेगसो ॥५४॥

१ भोगव्युं.

कूजन् कोलशुनकैः, श्यामैः शबलैश्च ।
पातितः स्फाटितः छिन्नः, विस्फुरन्ननेकशः ॥५४॥

असीहि अयसिवण्णाहिं, भल्लेहिं पट्टिसेहि य ।
छिन्नो भिन्नो विभिन्नो य, ओइण्णो पावकम्मुणा ॥५५॥
असिभिरतसीकुसुमवर्णैः, भल्लीभिः पट्टिशैश्च ।
छिन्नो भिन्नो विभिन्नश्च, अवतीर्णः पापकर्मणा ॥५५॥

अवसो लोहरहे जुत्तो, जलन्ते समिलाजुए ।
चोइओ तोत्तजुत्तेहि, रोज्झो वा जह पाडिओ ॥५६॥
अवशो लोहरथे युक्तः, ज्वलति समिलायुते ।
[1]नोदितस्तोत्रयोक्त्रैः, गवयो वा यथा पातितः ॥५६॥

हुयासणे जलन्तम्मि, चियासु महिसो विव ।
दड्ढो पक्को य अवसो, पावकम्मेहि पाविओ ॥५७॥
हुताशने ज्वलति, चितासु महिष इव ।
दग्धः पक्वश्चावशः, पापकर्मभिः प्रावृतः ॥५७॥

बला संडासतुण्डेहिं, लोहतुण्डेहिं पक्खिहिं ।
विलुत्तो विलवन्तो हं, ढंकगिद्धेहिऽणन्तसो ॥५८॥
बलात् संदंशतुण्डैः, लोहतुण्डैः पक्षिभिः ।
विलुप्तो विलपन्नहम् , ढंकगृध्रैरनन्तशः ॥५८॥

तण्हाकिलन्तो धावन्तो, पत्तो वेयरिणिं नदिं ।
जलं पाहिं ति चिन्तन्तो, खुरधाराहिं विवाइओ ॥५९॥
तृष्णाक्लान्तो धावन् , प्राप्तो वैतरणीं नदीम् ।
जलं पास्यामीति चिन्तयन् , क्षुरधाराभिर्व्यापादितः ॥५९॥

उण्हाभितत्तो संपत्तो, असिपत्तं महावणं ।
असिपत्तेहिं पडन्तेहिं, छिन्नपुव्वो अणेगसो ॥६०॥

१ नाकमां नाथ घाली चाबखाथी प्रेरायेलो.

उष्णाभितप्तः संप्राप्तः, असिपत्रं महावनम् ।
असिपत्रैः पतद्भिः छिन्नपूर्वोऽनेकशः ॥६०॥

मुग्गरेहिं मुसंढीहिं, सूलेहिं मुसलेहि य ।
गया संभग्गगत्तेहिं, पत्तं दुक्खं अणन्तसो ॥६१॥
[1]मुद्गरैर्मुसंढीभिः, शूलैर्मुशलैश्च ।
गदासंभग्नगात्रैः, प्राप्तं दुःखमनन्तशः ॥६१॥

खुरेहि तिक्खधारेहिं, छुरियाहिं कप्पणीहि य ।
कप्पिओ फालिओ छिन्नो, उक्कित्तो य अणेगसो ॥६२॥
क्षुरैः तीक्ष्णधारैः, क्षुरिकाभिः कल्पनीभिश्च ।
कल्पितः पाटितः छिन्नः, उत्कृतश्चानेकशः ॥६२॥

पासेहिं कूडजालेहिं, मिओ वा अवसो अहं ।
वाहिओ बद्धरुद्धो वा, बहू चेव विवाइओ ॥६३॥
पाशैः कूटजालैः, मृग इवावशोऽहम् ।
वाहितो बद्धरुद्धो वा , बहुशश्चैव व्यापादितः ॥६३॥

गलेहिं मगरजालेहिं, मच्छो वा अवसो अहं ।
उल्लिओ फालिओ गहिओ, मारिओ य अणन्तसो ॥६४॥
गलैर्मकरजालैः, मत्स्य इवावशोऽहम् ।
उल्लिखितः पाटितो गृहीतः, मारितश्चानन्तशः ॥६४॥

वीदंसएहिं जालेहि, लेप्पाहिं सउणो विव ।
गहिओ लग्गो बद्धो य, मारिओ य अणन्तसो ॥६५॥
विदंशकैर्जालैः, लेप्याभिः शकुन इव ।
गृहीतो लग्नो बद्धश्च, मारितश्चाऽनन्तशः ॥६५॥

कुहाडफरसुमाईहिं, वड्ढईहिं दुमो विव ।
कुट्टिओ फालिओ छिन्नो, तच्छिओ य अणन्तसो ॥६६॥

---

[1] शस्त्रनुं नाम.

कुठारपरश्वादिभिः, वार्धिकैर्द्रुम इव ।
कुट्टितः पाटितः छिन्नः, तक्षितश्चानन्तशः ॥६६॥

चवेडमुट्ठिमाईहिं, कुमारेहिं अयं पिव ।
ताडिओ कुट्टिओ भिन्नो, चुण्णिओ य अणन्तसो ॥६७॥
चपेटामुष्ट्यादिभिः, कुमारैरय इव ।
ताडितः कुट्टितो भिन्नः, चूर्णितश्चानन्तशः ॥६७॥

तत्ताइं तम्बलोहाइं, तउयाइं सीसयाणि य ।
पाइओ कलकलन्ताइं, आरसन्तो सुभेरवं ॥६८॥
तप्तानि ताम्रलोहादीनि, [1]त्रपुकानि सिसकानि च ।
पायितः कलकलायमानानि, आरसन् सुभेरवं ॥६८॥

तुहं पियाइं मंसाइं, खण्डाइं सोल्लगाणि य ।
खाइओ मि समंसाइं, अग्गिवण्णाइऽणेगसो ॥६९॥
[2]तव प्रियाणि मांसानि, खण्डानि सोल्लकानि च ।
खादितोऽस्मि स्वमांसानि, अग्निवर्णान्यनेकशः ॥६९॥

तुहं पिया सुरा सीहू, मेरओ य महूणि य ।
पाइओ मि जलन्तीओ, वसाओ रुहिराणि य ॥७०॥
तव प्रिया सुरा सीधुः, मेरका च मधूनि च ।
पायितोऽस्मि ज्वलन्तीः, वसा रुधिराणि च ॥७०॥

निच्चं भीएण तत्थेण, दुहिएण, वहिएण य ।
परमा दुहसंबद्धा, वेयणा वेदिता मए ॥७१॥
नित्यं भीतेन त्रस्तेन, दुःखितेन व्यथितेन च ।
परमा दुःखसंबद्धाः, वेदना वेदिता मया ॥७१॥

तिव्वचण्डप्पगाढाओ, घोराओ अइदुस्सहा ।
महब्भयाओ भीमाओ, नरएसु वेदिता मए ॥७२॥

१ लाख. २ आ कथन परमाधामीनुं छे.

तीव्राश्चण्डप्रगाढाश्च, घोरा अति दुःसहाः ।
महाभया भीमाः, नरकेषु वेदिता मया ॥७२॥

जारिसा माणुसे लोए, ताया दीसन्ति वेयणा ।
एत्तो अणन्तगुणिया, नरएसु दुक्खवेयणा ॥७३॥
यादृश्यो मानुष्ये लोके, तात दृश्यन्ते वेदनाः ।
इतोऽनन्तगुणिताः नरकेषु दुःखवेदनाः ॥७३॥

सव्वभवेसु अस्साया, वेयणा वेदिता मए ।
निमेसन्तरमित्तंपि, जं साता नत्थि वेयणा ॥७४॥
सर्वभवेष्वसाता, वेदना वेदिता मया ।
निमेषान्तरमात्रमपि, यत्साता नास्ति वेदना ॥७४॥

तं बिन्तम्मापियरो, छन्देणं पुत्त पव्वया ।
नवरं पुण सामण्णे, दुक्खं निप्पडिकम्मया ॥७५॥
तं ब्रूतोऽम्बापितरौ, छन्दसा पुत्र! प्रव्रज ।
न वरं पुनः श्रामण्ये, दुःखं निःप्रतिकर्मता ॥७५॥

सो बेइ अम्मापियरो, एवमेयं जहा फुडं ।
पडिकम्मं को कुणई, अरण्णे मियपक्खिणं ॥७६॥
स ब्रूतेऽम्बापितरौ, एवमेतद्यथा स्फुटम् ।
प्रतिकर्म कः करोति, अरण्ये मृगपक्षिणाम् ॥७६॥

एगब्भूए अरण्णे व, जहा उ चरई मिगे ।
एवं धम्मं चरिस्सामि, संजमेण तवेण य ॥७७॥
एकभूतोऽरण्ये वा, यथा तु चरति मृगः ।
एवं धर्मं चरिष्यामि, संयमेन तपसा च ॥७७॥

जहा मिगस्स आयंको, महारण्णम्मि जायई ।
अच्छन्तं रुक्खमूलम्मि, को णं ताहे तिगिच्छिई ॥७८॥

यथा मृगस्याऽऽतंकः, महारण्ये जायते ।
तिष्ठन्तं वृक्षमूले, कस्तं तदा चिकित्सति ॥७८॥

को वा से ओसहं देइ, को वा से पुच्छइ सुहं ।
को से भत्तं च पाणं वा, आहरित्तु पणामए ॥७६॥
को वा तस्मै औषधं दत्ते, को वा तस्य पृच्छति सुखम् ।
कस्तस्मै भक्तं च पानं वा, आहृत्य प्रणामयेत् ॥७९॥
जया से सुही होइ, तया गच्छइ गोयरं ।
भत्तपाणस्स अट्ठाए वल्लराणि सराणि य ॥८०॥
यदा स सुखी भवति, तदा गच्छति गोचरम् ।
भक्तपानस्यार्थं, वल्लराणि सरांसि च । ॥८०॥
खाइत्ता पाणियं पाउं, वल्लरेहिं सरेहि य ।
मिगचारियं चरित्ताणं, गच्छई मिगचारियं ॥८१॥
खादित्वा पानीयं पीत्वा, वल्लरेषु सरस्सु च ।
मृगचर्यां चरित्वा, गच्छति [1]मृगचर्या ॥८१॥
एवं समुट्ठिओ भिक्खु, एवमेव अणेगए ।
मिगचारियं चरित्ताणं, उड्ढं पक्कमई दिसं ॥८२॥
एवं समुत्थितो भिक्षुः, एवमेवाऽनेकक: ।
मृगचर्यां चरित्वा, उर्ध्वं प्रक्रामते दिशम् ॥८२॥
जहा मिए एग अणेगचारी, अणेगवासे धुवगोचरे य ।
एवं मुणी गोयरियं पविट्ठे, नो हीलए नो वि य खिसएज्जा ॥८३॥
यथा मृग एकोऽनेकचारी, अनेकवासो ध्रुवगोचरश्च ।
एवं मुनिर्गोचर्यां प्रविष्टः, नो हीलयेन्नोऽपिच खिसयेत्॥८३॥
मिगचारियं चरिस्सामि, एवं पुत्ता जहासुहं ।
अम्मापिऊहिंऽणुन्नाओ, जहाइ उवहिं तहा ॥८४॥

१ पोताने स्थाने

मृगचर्यां चरिष्यामि, एवं पुत्र ! यथासुखम् ।
अऽम्बापितृभ्यामनुज्ञातः, जहात्युपधिं तथा ॥८४॥

मिगचारियं चरिस्सामि, सव्वदुक्खविमोक्खणिं ।
तुब्भेहिं अब्भणुन्नाओ, गच्छ पुत्त जहासुहं ॥८५॥

मृगचर्यां चरिष्यामि, सर्वदुःखविमोक्षणीम् ।
युष्माभ्यामनुज्ञातः, गच्छ पुत्र ! यथासुखम् ॥८५॥

एवं सो अम्मापियरो, अणुमाणित्ताण बहुविहं ।
ममत्तं छिन्दइ ताहे, महानागो व्व कंचुयं ॥८६॥

एवं सोऽम्बापितरौ, अनुमान्य बहुविधम् ।
ममत्वं छिनत्ति तदा, महानाग इव कंचुकम् ॥८६॥

इड्ढी वित्तं च मित्ते य, पुत्तदारं च नायओ ।
रेणुयं व पडे लग्गं, निद्धुणित्ताण निग्गओ ॥८७॥

ऋद्धिं वित्तं च मित्राणि च, पुत्रदारांश्च ज्ञातीन् ।
रेणुकमिव पटे लग्नं, निर्धूय निर्गतः ॥८७॥

पंचमहव्वयजुत्तो, पंचहिं समिओ तिगुत्तिगुत्तो य ।
सब्भिन्तरबाहिरओ, तवोकम्मंसि उज्जुओ ॥८८॥

पंचमहाव्रतयुक्तः, पंचभिः समितस्त्रिगुप्तिगुप्तश्च ।
साभ्यन्तरबाह्ये, तपःकर्मणि उद्युक्तः ॥८८॥

निम्ममो निरहंकारो, निस्संगो चत्तगारवो ।
समो य सव्वभूएसु, तसेसु थावरेसु य ॥८९॥

निर्ममो निरहंकारः, निःसंगस्त्यक्तगौरवः ।
समश्च सर्वभूतेषु, त्रसेषु स्थावरेषु च ॥८९॥

लाभालाभे सुहे दुक्खे, जीविए मरणे तहा ।
समो निन्दापसंसासु, तहा माणावमाणओ ॥९०॥

लाभालाभे सुखेदु:खे, जीविते मरणे तथा ।
समो निन्दाप्रशंसयोः समो मानापमानयोः ॥९०॥

गारवेसु कसाएसु, दण्डसल्लभएसु य ।
नियत्तो हाससोगाओ, अनियाणो अबन्धवो ॥९१॥
गौरवेभ्यः कषायेभ्यः, दण्डशल्यभयेभ्यश्च ।
निवृत्तो हास्यशोकात्, अनिदानोऽबांधवः ॥९१॥

अणिस्सिओ इहं लोए, परलोए अणिस्सिओ ।
वासीचन्दणकप्पो य, असणे अणसणे तहा ॥९२॥
अनिश्रित इह लोके, परलोकेऽनिश्रितः ।
वासीचन्दनकल्पश्च, अशनेऽनशने तथा ॥९२॥

अप्पसत्थेहिं दारेहिं, सव्वओ पिहियासवे ।
अज्झप्पज्झाणजोगेहिं, पसत्थदमसासणे ॥९३॥
अप्रशस्तेभ्यो द्वारेभ्यः, सर्वतः पिहितास्रवः ।
अध्यात्मध्यानयोगैः, प्रशस्तदमशासनः ॥९३॥

एवं नाणेण चरणेण, दंसणेण तवेण य ।
भावणाहि य सुद्धाहि, सम्मं भावेत्तु अप्पयं ॥९४॥
एवं ज्ञानेन चरणेन, दर्शनेन तपसा च ।
भावनाभिश्च शुद्धाभिः, सम्यग् भावयित्वाऽऽत्मानम् ॥९४॥

बहुयाणि उ वासाणि, सामण्णमणुपालिया ।
मासिएण उ भत्तेण, सिद्धिं पत्तो अणुत्तरं ॥९५॥
बहुकानि तु वर्षाणि, श्रामण्यमनुपाल्य ।
मासिकेन तु भक्तेन, सिद्धिं प्राप्तोऽनुत्तराम् ॥९५॥

एवं करन्ति संबुद्धा, पण्डिया पवियक्खणा ।
विणिअट्टन्ति भोगेसु, मियापुत्ते जहामिसी ॥९६॥

एवं कुर्वन्ति संबुद्धाः, पण्डिताः प्रविचक्षणाः ।
विनिवर्तन्ते भोगेभ्यः, मृगापुत्रो यथा ऋषिः ॥९६॥

महापभावस्स महाजसस्स, मियाइ पुत्तस्स निसम्म भासियं ।
तवप्पहाणं चरियं च उत्तमं, गइप्पहाणं च तिलोगविस्सुतं॥९७॥

महाप्रभावस्य महायशसः, मृगायाः पुत्रस्य निशम्य भाषितम् ।
तपःप्रधानं चारित्रं चोत्तमं, प्रधानगतिं च त्रिलोकविश्रुताम् ॥९७॥

वियाणिया दुक्खविवद्धणं धणं, ममत्तबंधं च महाभयावहं ।
सुहावहं धम्मधुरं अणुत्तरं, धारेज्ज निव्वाणगुणावहं महं ॥९८॥

विज्ञाय दुःखविवर्धनं धनं, ममत्वबन्धं च महाभयावहम् ।
सुखावहां धर्मधुरामनुत्तरां, धारयध्वं निर्वाणगुणावहांमहतीम्॥९८॥

ति बेमि ॥इति मयापुत्तीयं अज्झयणं समत्तं ॥१९॥
इति ब्रवीमि—इति मृगापुत्रीयमध्ययनं समाप्तं ॥१९॥

---

## ॥ अह महानियण्ठिज्जं वीसइमं अज्झयणं ॥

### ॥ अथ महानिर्ग्रन्थीयं विंशतितममध्ययनं ॥

सिद्धाण नमो किच्चा, संजयाणं च भावओ ।
अत्थधम्मगइं तच्चं, अणुसट्ठिं सुणेह मे ॥१॥

सिद्धान् नमस्कृत्य, संयतांश्च भावतः ।
अर्थधर्मगतिं तथ्यां, अनुशिष्टिं श्रृणुत मम ॥१॥

पभूयरयणो राया, सेणिओ मगहाहिवो ।
विहारजत्तं निज्जाओ, मण्डिकुच्छिंसि चेइए ॥२॥

प्रभूतरत्नो राजा, श्रेणिको मगधाधिपः ।
विहारयात्रया निर्यातः, मण्डितकुक्षौ चैत्ये ॥२॥

नाणादुमलयाइण्णं, नाणापक्खिनिसेवियं ।
नाणाकुसुमसंछन्नं, उज्जाणं नन्दणोवमं ॥३॥
नानाद्रुमलताकीर्णं, नानापक्षिनिषेवितम् ।
नानाकुसुमसंछन्नं, उद्यानं नन्दनोपमम् ॥३॥

तत्थ सो पासई साहुं, संजयं सुसमाहियं ।
निसिन्नं रुक्खमूलम्मि, सुकुमालं सुहोइयं ॥४॥
तत्र स पश्यति साधुं, संयतं सुसमाहितम् ।
निषण्णं वृक्षमूले, सुकुमारं सुखोचितम् ॥४॥

तस्स रूवं तु पासित्ता, राइणो तम्मि संजए ।
अच्चन्तपरमो आसी, अउलो रूवविम्हओ ॥५॥
तस्य रूपं तु दृष्ट्वा, राजा तस्मिन् संयते ।
अत्यन्तपरम आसीत , अतुलो रूपविस्मयः ॥५॥

अहो वण्णो अहो रूवं, अहो अज्जस्स सोमया ।
अहो खन्ती अहो मुत्ती, अहो भोगे असंगया ॥६॥
अहो वर्णो अहो रूपं, अहो आर्यस्य सौम्यता ।
अहो क्षान्तिरहो मुक्तिः, अहो भोगेऽसंगता ॥६॥

तस्स पाए उ वन्दित्ता, काऊण य पयाहिणं ।
नाइदूरमणासन्ने, पंजली पडिपुच्छई ॥७॥
तस्य पादौ तु वन्दित्वा, कृत्वा च प्रदक्षिणाम् ।
नातिदुरमनासन्नः, प्राञ्जलिः परिपृच्छति ॥७॥

तरुणो सि अज्जो पव्वइओ, भोगकालम्मि संजया ।
उवट्ठिओ सि सामण्णे, एयमट्ठं सुणेमि ता ॥८॥
तरुणोऽस्यार्य ! प्रव्रजितः, भोगकाले संयतः ।
उपस्थितोऽसि श्रामण्ये, एतमर्थं शृणोमि तावत् ॥८॥

अणाहोमि महाराय, नाहो मज्झ न विज्जई।
अणुकम्पगं सुहिं वावि, कंचि नाभिसमेमहं ॥९॥
अनाथोऽस्मि महाराज!, नाथो मम न विद्यते।
अनुकम्पकं सुहृदं वापि, कंचिन्नाभिसमेम्यहम् ॥९॥

तओ सो पहसिओ राया, सेणिओ मगहाहिवो।
एवं ते इड्ढिमन्तस्स, कहं नाहो न विज्जई ॥१०॥
ततः स प्रहसितो राजा, श्रेणिको मगधाधिपः।
एवं ते ऋद्धिमतः, कथं नाथो न विद्यते ॥१०॥

होमि नाहो भयंताणं, भोगे भुंजाहि संजया।
मित्तनाईपरिवुडो, माणुस्सं खु सुदुल्लहं ॥११॥
भवामि नाथो भदन्तानां, भोगान् भुंक्ष्व संयत ?
मित्रज्ञातिपरिवृतः (सन् ), मानुष्यं खलु सुदुर्लभं ॥११॥

अप्पणा वि अणाहोऽसि, सेणिया मगहाहिवा।
अप्पणा अणाहो सन्तो, कस्स नाहो भविस्ससि ॥१२॥
आत्मनाप्यनाथोऽसि, श्रेणिक! मगधाधिप ?।
आत्मनाऽनाथो सन् , कस्य नाथो भविष्यसि ॥१२॥

एवं वुत्तो नरिन्दो सो, सुसंभन्तो सुविम्हिओ।
वयणं अस्सुयपुव्वं, साहुणा विम्हयन्निओ ॥१३॥
एवमुक्तो नरेन्द्रः सः, सुसंभ्रान्तः सुविस्मितः।
वचनमश्रुतपूर्वं, साधुना विस्मयान्वितः ॥१३॥

अस्सा हत्थी मणुस्सा मे, पुरं अन्तेउरं च मे।
भुंजामि माणुसे भोगे, आणा इस्सरियं च मे ॥१४॥
अश्वा हस्तिनो मनुष्या मे, पुरमन्तःपुरं च मे।
भुनज्मि मानुष्यान्भोगान्, आज्ञैश्वर्यं च मे ॥१४॥

एरिसे सम्पयग्गम्मि, सव्वकामसमप्पिए ।
कहं अणाहो भवइ, मा हु भन्ते मुसं वए ॥१५॥
ईदृशे संपदग्रे, समर्पितसर्वकामे ।
कथमनाथो भवति, मा खलु भदन्त ? मृषा वदतु ॥१५॥

न तुमं जाणे अणाहस्स, अत्थं [1]पोत्थं च पत्थिवा ।
जहा अणाहो भवई, सणाहो वा नराहिवा ॥१६॥
न त्वं जानीषेऽनाथस्य, अर्थं प्रोत्थां च पार्थिव ! ।
यथाऽनाथो भवति, सनाथो वा नराधिप ! ॥१६॥

सुणेह मे महाराय, अव्वक्खित्तेण चेयसा ।
जहा अणाहो भवई, जहा मेयं पवत्तियं ॥१७॥
शृणु मे महाराज !, अव्याक्षिप्तेन चेतसा ।
यथाऽनाथो भवति, यथा मयैतत् प्रवर्तितम् ॥१७॥

कोसम्बी नाम नयरी, पुराण पुरभेयणी ।
तत्थ आसी पिया मज्झ, पभूयधणसंचओ ॥१८॥
कौशाम्बी नाम्नी नगरी, पुराणपुरभेदिनी ।
तत्रासीत्पिता मम, प्रभूतधनसंचयः ॥१८॥

पढमे वए महाराय, अउला मे अच्छिवेयणा ।
अहोत्था विउलो दाहो, सव्वगत्तेसु पत्थिवा ॥१९॥
प्रथमे वयसि महाराज !, अतुला मेऽक्षिवेदना ।
अभूद् विपुलो दाहः, सर्वगात्रेषु पार्थिव ? ॥१९॥

सत्थं जहा परमतिक्खं, सरीरविवरन्तरे ।
आवीलिज्ज अरी कुद्धो, एवं मे अच्छिवेयणा ॥२०॥
शस्त्रं यथा परमतीक्ष्णं, शरीरविवरांतरे ।
आपीडयेदरिः क्रुद्धः, एवं मेऽक्षिवेदना ॥२०॥

1 भावार्थ.

तियं मे अन्तरिच्छं च, उत्तमंगं च पीडई ।
इन्दासणिसमा घोरा, वेयणा परमदारुणा ॥२१॥

त्रिकं मे [1]अन्तरेच्छं च, उत्तमांगं च पिडयति ।
इन्द्राशनिसमा घोरा, वेदना परमदारुणा ॥२१॥

उवट्ठिया मे आयरिया, विज्जामन्ततिगिच्छगा ।
अबीया सत्थकुसला, मन्तमूलविसारया ॥२२॥

उपस्थिता ममाचार्याः, विद्यामंत्रचिकित्सकाः ।
अद्वितीयाः शास्त्रकुशलाः, मन्त्रमूलविशारदाः ॥२२॥

ते मे तिगिच्छं कुव्वन्ति, चाउप्पायं जहाहियं ।
न य दुक्खा विमोयन्ति, एसा मज्झ अणाहया ॥२३॥

ते मे चिकित्सां कुर्वन्ति, [2]चतुष्पादां यथाख्याताम् ।
न च दुःखाद्विमोचयन्ति, एषा ममाऽनाथता ॥२३॥

पिया मे सव्वसारंपि, दिज्जाहि मम कारणा ।
न य दुक्खा विमोयन्ति, एसा मज्झ अणाहया ॥२४॥

पिता मे सर्वसारमपि, अदात् मम कारणात् ।
न च दुःखाद्विमोचयति, एषा ममाऽनाथता ॥२४॥

माया वि मे महाराज, पुत्तसोगदुहट्टिया ।
न य दुक्खा विमोयन्ति, एसा मज्झ अणाहया ॥२५॥

माताऽपि मे महाराज !, पुत्रशोकदुःखार्ता ।
न च दुःखाद्विमोचयति, एषा ममाऽनाथता ॥२५॥

भायरो मे महाराय, सगा जेट्ठकणिट्ठगा ।
न य दुक्खा विमोयन्ति, एसा मज्झ अणाहया ॥२६॥

भ्रातरो मे महाराज ! स्वका ज्येष्ठकनिष्ठकाः ।
न च दुःखाद्विमोचयन्ति, एषा ममाऽनाथता ॥२६॥

१ इच्छा भंगुर हृदय २ चार प्रकारना उपायवाळी.

भइणीओ मे महाराय, सगा जेट्ठकणिट्ठगा ।
न य दुक्खा विमोयन्ति, एसा मज्झ अणाहया ॥२७॥

भगिन्यो मे महाराज !, स्वका ज्येष्ठकनिष्ठकाः ।
न च दुःखाद्विमोचयन्ति, एषा ममाऽनाथता ॥२७॥

भारिया मे महाराय, अणुरत्ता अणुव्वया ।
अंसुपुण्णेहि नयणेहिं, उरं मे परिसिचई ॥२८॥

भार्या मे महाराज !, अनुरक्ताऽनुव्रता ।
अश्रुपूर्णाभ्यां नयनाभ्यां उरो मे परिसिञ्चति ॥२८॥

अन्नं पाणं च ण्हाणं च, गन्धमल्लविलेवणं ।
मए नायमनायं वा, सा बाला नेव भुंजई ॥२९॥

अन्नं पानं च स्नानं च, गन्धमाल्यविलेपनम् ।
मयाज्ञातमज्ञातं वा, सा बाला नैव भुंक्ते ॥२९॥

खणं पि मे महाराय, पासाओ मे न फिट्टई ।
न य दुक्खा विमोएइ, एसा मज्झ अणाहया ॥३०॥

क्षणमपि मे महाराज ! पार्श्वतो मे नापयाति ।
न च दुःखाद्विमोचयति, एषा ममाऽनाथता ॥३०॥

तओ हं एवमाहंसु, दुक्खमा हु पुणो पुणो ।
वेयणा अणुभविउं जे, संसारम्मि अणन्तए ॥३१॥

ततोऽहमेवमब्रुवम्, दुःक्षमा हु पुनःपुनः ।
वेदनाऽनुभवितुं या, संसारेऽनन्तके ॥३१॥

सयं च जइ मुच्चेज्जा, वेयणा विउला इओ ।
खन्तो दन्तो निरारम्भो, पव्वए अणगारियं ॥३२॥

सकृच्च यदि मुच्ये, वेदनाया विपुलाया इतः ।
क्षान्तो दान्तो निरारभः, प्रव्रजाम्यनगारिताम् ॥३२॥

एवं च चिन्तइत्ताणं, पसुत्तो मि नराहिवा ।
परीयत्तन्तीए राईए, वेयणा मे खयं गया ॥३३॥
एवं च चिन्तयित्वा, प्रसुप्तोऽस्मि नराधिप ?
परिवर्तमानायां रात्रौ, वेदना मे क्षयं गता ॥३३॥

तओ कल्ले पभायम्मि, आपुच्छित्ताण बन्धवे ।
खन्तो दन्तो निरारम्भो, पव्वइओऽणगारियं ॥३४॥
ततः [1]कल्यः प्रभाते, आपृच्छ्य बान्धवान् ।
क्षान्तो दान्तो निरारंभः, प्रव्रजितोऽनगारिताम् ॥३४॥

तो हं नाहो जाओ, अप्पणो य परस्स य ।
सव्वेसिं चेव भूयाणं, तसाण थावराण य ॥३५॥
ततोऽहं नाथो जातः, आत्मनश्च परस्य च ।
सर्वेषां चैव भूतानां, त्रसानां स्थावराणाम् च ॥३५॥

अप्पा नई वेयरणी, अप्पा मे कूडसामली ।
अप्पा कामदुहा धेणू, अप्पा मे नन्दणं वणं ॥३६॥
आत्मा नदी वैतरणी, आत्मा मे कूटशाल्मली ।
आत्मा कामदुघा धेनुः, आत्मा मे नन्दनं वनम् ॥३६॥

अप्पा कत्ता विकत्ता य, दुहाण य सुहाण य ।
अप्पा मित्तममित्तं च, दुप्पट्ठिय सुपट्ठिओ ॥३७॥
आत्मा कर्ता विकरिता च, दुःखानां च सुखानां च ।
आत्मा मित्रममित्रश्च, दुःप्रस्थितः सुप्रस्थितः ॥३७॥

इमा हु अन्ना वि अणाहया निवा, तमेगचित्तो निहुओ सुणेहि ।
नियण्ठधम्मं लहीयाण वी जहा, सीयन्ति एगे बहुकायरा नरा॥३८॥
इयं खल्वन्याप्यनाथता नृप !, तामेकचित्तो निभृतः शृणु ।
निर्ग्रन्थधर्मं लब्ध्वाऽपि यथा, सीदन्त्येके बहुकातरा नराः॥३८॥

[1] निरोगी.

जो पव्वइत्ताण महव्वयाइं, सम्मं च नो फासयई पमाया ।
अनिग्गहप्पा य रसेसु गिद्धे, न मूलओ छिन्नइ बन्धणं से ॥३९॥
य: प्रव्रज्य महाव्रतानि, सम्यक् च नो स्पृशति प्रमादात् ।
अनिगृहीतात्मा च रसेषु गृद्धः, न मूलतः छिनत्ति बंधनं सः

आउत्तया जस्स न अत्थि काइ, इरियाए भासाए तहेसणाए ।
आयाणनिक्खेवदुगुंछणाए, न वीरजायं अणुजाइ मग्गं ॥४०॥
आयुक्तता यस्य नास्ति कापि, ईर्यायां भाषायां तथैषणायाम् ।
आदाननिक्षेपजुगुप्सनासु, न वीरयातमनुयाति मार्गम् ॥४०॥

चिरं पि से मुण्डरुई भवित्ता, अथिरव्वए तवनियमेहिं भट्ठे ।
चिरं पि अप्पाण किलेसइत्ता, न पारए होइ हु संपराए ॥४१॥
चिरमपि स मुण्डरुचिर्भूत्वा, अस्थिरव्रतस्तपोनियमेभ्यो भ्रष्टः ।
चिरमप्यात्मानं क्लेशयित्वा, न पारगो भवति खलु संपरायस्य॥

पोल्ले व मुट्ठी जह से असारे, अयन्तिए कूडकहावणे वा ।
राढामणी वेरुलियप्पगासे, अमहग्घए होइ हु जाणएसु ॥४२॥
सुषिरेव मुष्टिर्यथा स असारः, अयंत्रितः कूटकार्षापण इव ।
राढामणिर्वैडूर्यप्रकाशः, अमहार्घको भवति खलु ज्ञेषु ॥४२॥

कुसीललिंगं इह धारइत्ता, इसिज्झयं जीविय वूहइत्ता ।
असंजए संजयलप्पमाणे, विणिग्घायमागच्छइ से चिरंपि ॥४३॥
कुशीललिंगमिह धारयित्वा, ऋषिध्वजं जीवितं बृंहयित्वा ।
असंयतः सयतमिति लपन्, विनिघातमागच्छति स चिरमपि॥४३॥

विसं तु पीयं जह कालकूडं, हणाइ सत्थं जह कुग्गहीयं ।
एसो वि धम्मो विसओववन्नो, हणाइ वेयाल इवाविवन्नो ॥४४॥
विषं तु पीत यथा कालकूटं, हिनस्ति शस्त्रं यथा कुगृहीतम् ।
एषोऽपिधर्मो विषयोपपन्नः, हन्ति वेताल इवावि[1]पन्नः॥४४॥

---

१ नहि वश थयेलो.

जे लक्खणं सुविण पउंजमाणे, निमित्तकोऊहलसंपगाढे ।
कुहेडविज्जासवदारजीवी, न गच्छई सरणं तम्मि काले ॥४५॥
यो लक्षणं स्वप्नं प्रयुञ्जानः, निमित्तकौतूहलसंप्रगाढः ।
कुहेटकविद्यास्रवद्वारजीवी, न गच्छति शरणं तस्मिन् काले॥४५
तमंतमेणेव उ से असीले, सया दुही विप्परियामुवेइ ।
संधावई नरगतिरिक्खजोणिं, मोणं विराहेत्तु असाहुरुवे ॥४६॥
तमस्तमसैव तु स अशीलः, सदा दुःखी विपर्यासमुपैति ।
संधावति नरकतिर्यग्योनीः, मौनं विराध्याऽसाधुरूपः ॥४६॥
उद्देसियं कीयगडं नियागं, न मुंचई किंच अणेसणिज्जं ।
अग्गी विवा सव्वभक्खी भवित्ता, इत्तो चुए गच्छइ कट्टु पावं॥
औद्देशिकं क्रीतकृतं नियागं, न मुंचति किंचिदनेषणीयम् ।
अग्निरिव सर्वभक्षीभूत्वा, इतश्च्युतो(दुर्गतिं)गच्छति कृत्वा पापम्
न तं अरी कंठछेत्ता करेइ, जं से करे अप्पणिया दुरप्पया ।
से नाहइ मच्चुमुहं तु पत्ते, पच्छाणुतावेण दयाविहूणो ॥४८॥
न तदरिः कंठछेत्ता करोति, यत्तस्य करोत्यात्मीया दुरात्मता ।
स ज्ञास्यति मृत्युमुखं तु प्राप्तः, पश्चादनुतापेन दयाविहीनः॥४८॥
निरट्ठिया नग्गरुई उ तस्स, जे उत्तमट्ठं विवज्जासमेइ ।
इमे वि से नत्थि परे वि लोए, दुहओ वि से झिज्जइ तत्थ लोए॥
निरर्थिका नाग्न्यरुचिस्तु तस्य, य उत्तमार्थ विपर्यासमेति ।
अयमपि तस्य नास्ति परोऽपि लोकः,द्विधापि स क्षीयते तत्र लोके
एमेव हा छन्दकुसीलरूवे, मग्गं विराहित्तु जिणुत्तमाणं ।
कुररी विवा भोगरसाणुगिद्धा, निरट्ठसोया परियावमेइ ॥५०॥
एवमेव यथा छन्दकुशीलरूपः, मार्गं विराध्य जिनोत्तमानाम् ।
कुररीव भोगरसानुगृद्धा, निरर्थशोका परितापमेति ॥५०॥

सोच्चाण मेहावि सुभासियं इमं, अणुसासणं नाणगुणोववेयं ।
मग्गं कुसीलाण जहाय सव्वं, महानियंठाण वए पहेण ॥५१॥

श्रुत्वा मेधाविन् सुभाषितमिदं, अनुशासनं ज्ञानगुणोपपेतम् ।
मार्गं कुशीलानां हित्वा सर्वं, महानिर्ग्रन्थानां व्रजेःपथा ॥५१॥

चरित्तमायारगुणन्निए तओ, अणुत्तरं संजम पालियाण ।
निरासवे संखवियाण कम्मं, उवेइ ठाणं विउलुत्तमं धुवं ॥५२॥

चारित्राचारगुणान्वितस्ततः, अनुत्तरं संयमं पालयित्वा ।
निरास्रवः संक्षपय्यकर्म, उपैति स्थानं विपुलोत्तमं ध्रुवम् ॥५२॥

एवुग्गदन्ते वि महातवोधणे, महामुणी महापइन्ने महायसे ।
महानियण्ठिज्जमिणं महासुयं, से काहए महया वित्थरेणं ॥५३॥

एवमुग्रो दान्तोऽपि महातपोधनः, महामुनिर्महाप्रतिज्ञो महायशाः।
महानिर्ग्रन्थीयमिदं महाश्रुतं, स कथयति महता विस्तरेण॥५३॥

तुट्ठो य सेणिओ राया, इणमुदाहु कयंजली ।
अणाहत्तं जहाभूयं, सुट्ठु मे उवदंसियं ॥५४॥

तुष्टश्च खलु श्रेणिको राजा, इदमुदाह कृतांजलिः ।
अनाथत्वं यथाभूतं, सुष्ठु मे उपदर्शितम् ॥५४॥

तुज्झं सुलद्धं खु मणुस्स जम्मं, लाभा सुलद्धा य तुमे महेसी ।
तुब्भे सणाहा य सबन्धवा य, जं भे ठिया मग्गे जिणुत्तमाणं ॥

त्वया सुलब्धं खलुमानुष्यं जन्म, लाभाः सुलब्धाश्च त्वया महर्षे॥
यूयं सनाथाश्च सबांधवाश्च, यद्भवन्तः स्थिता मार्गे जिनोत्तमानाम्

तं सि नाहो अणाहाणं, सव्वभूयाण संजया ।
खामेमि ते महाभाग, इच्छामि अणुसासिउं ॥५६॥

त्वमसि नाथोऽनाथानां, सर्वभूतानां संयत!।
क्षमे त्वां महाभाग !, इच्छाम्यनुशासयितुम् ॥५६॥

पुच्छिऊण मए तुब्भं, झाणविग्घाओ जो कओ ।
निमन्तिया य भोगेहिं, तं सव्वं मरिसेहि मे ॥५७॥
पृष्टा मया युष्माकं, ध्यानविघातस्तु यः कृतः ।
निमंत्रिताश्च भोगैः, तत्सर्वं मर्षयंतु मे ॥५७॥

एवं थुणित्ताण स रायसीहो, अणगारसीहं परमाइ भत्तीए ।
सओरोहो सपरियणो सबन्धवो, धम्माणुरत्तो विमलेण चेयसा ॥
एवं स्तुत्वा स राजसिंहः, अनगारसिंहं परमया भक्त्या ।
सावरोधः सपरिजनः सबान्धवः, धर्मानुरक्तो विमलेन चेतसा ॥५८॥

ऊससियरोमकूवो, काऊण य पयाहिणं ।
अभिवन्दिऊण सिरसा, अइयाओ नराहिवो ॥५९॥
उच्छ्वसितरोमकूपः, कृत्वा च प्रदक्षिणाम् ।
अभिवन्द्य शिरसा, अतियातो नराधिपः ॥५९॥

इयरो वि गुणसमिद्धो, तिगुत्तिगुत्तो तिदण्डविरओ य ।
विहग इव विप्पमुक्को, विहरइ वसुहं विगयमोहो ॥६०॥
इतरोऽपि गुणसमृद्धः, त्रिगुप्तिगुप्तस्त्रिदण्डविरतश्च ।
विहंग इव विप्रमुक्तः, विहरति वसुधायां विगतमोहः ॥६०॥
त्ति बेमि ॥ महानियण्ठिज्जं वीसइमं अज्झयणं समत्तं ॥२०॥
इति ब्रवीमि महानिर्ग्रंथीय विंशतितममध्ययनं समाप्तं ॥

## ॥ अह समुद्दपालीयं एगवीसइमं अज्झयणं ॥

॥ अथ समुद्रपालीयमेकविंशमध्ययनं ॥

चम्पाए पालिए नाम, सावए आसि वाणिए ।
महावीरस्स भगवओ, सीसे सो उ महप्पणो ॥१॥
चम्पायां पालितो नाम, श्रावक आसीद् वणिक् ।
महावीरस्य भगवतः शिष्यः स तु महात्मनः ॥१॥

निग्गन्थे पावयणे, सावए से वि कोविए ।
पोएण ववहरन्ते, पिहुण्डं नगरमागए ॥२॥
नैर्ग्रन्थे प्रावचने, श्रावकः सोऽपि कोविदः ।
पोतेन व्यवहरन्, पिहुण्डं नगरमागतः ॥२॥

पिहुंडे ववहरन्तस्स, वाणिओ देइ धूयरं ।
तं ससत्तं पइगिज्झ, सदेसमह पत्थिओ ॥३॥
पिहुण्डे व्यवहरते (तस्मै), वणिग् ददाति दुहितरम् ।
तां ससत्त्वां प्रतिगृह्य, स्वदेशमथ प्रस्थितः ॥३॥

अह पालियस्स घरिणी, समुद्दम्मि पसवई ।
अह बालए तर्हि जाए, समुद्दपालि त्ति नामए ॥४॥
अथ पालितस्य गृहिणी, समुद्रे प्रसूते (स्म) ।
अथ बालकस्तस्मिञ्जाते, समुद्रपाल इति नामतः ॥४॥

खेमेण आगए चम्पं, सावए वाणिए घरं ।
संवड्ढई घरे तस्स, दारए से सुहोइए ॥५॥
क्षेमेणागते चम्पायां, श्रावके वणिजि गृहम् ।
संवर्धते गृहे तस्य, दारकः स सुखोचितः ॥५॥

बावत्तरी कलाओ य, सिक्खई नीइकोविए ।
जोव्वणेण य संपन्ने, सुरुवे पियदंसणे ॥६॥
द्वासप्तति कलाश्च, शिक्षितो नीतिकोविदः ।
यौवनेन च संपन्नः, सुरूप. प्रियदर्शनः ॥६॥

तस्स रूववई भज्जं, पिया आणेइ रूविणि ।
पासाए कीलए रम्मे, देवो दोगुन्दओ जहा ॥७॥
तस्य रूपवतीं भार्यां, पिताऽऽनयति रूपिणीम् ।
प्रासादे क्रीडति रम्ये, देवो दोगुंदको यथा ॥७॥

अह अन्नया कयाई, पासायालोयणे ठिओ ।
वज्झ मण्डणसोभागं, वज्झं पासइ वज्झगं ॥८॥

अथान्यदा कदाचित्, प्रासादालोकने स्थितः ।
वध्यमण्डनशोभाकं, वध्यं पश्यति [1]वध्यगम् ॥८॥

तं पासिऊण संवेगं, समुद्दपालो इणमब्बवी ।
अहोऽसुभाण कम्माणं, निज्जाणं पावगं इमं ॥९॥

तं दृष्ट्वा संवेगं, समुद्रपाल इदमब्रवीत् ।
अहो अशुभानां कर्मणां, निर्याणं पापकमिदम् ॥९॥

संबुद्धो सो तहिं भगवं, परमसंवेगमागओ ।
आपुच्छम्मापियरो, पव्वए अणगारियं ॥१०॥

संबुद्धः स तत्र भगवान्, परमसंवेगमागतः ।
आपृच्छ्य मातापितरौ, प्रव्रजितोऽनगारिताम् ॥१०॥

जहित्तु सग्गन्थमहाकिलेसं, महन्तमोहं कसिणं भयावहं ।
परियायधम्मं चाभिरोयएज्जा, वयाणि सीलाणि परीसहे य ॥११॥

हित्वा सद्ग्रन्थमहाक्लेशं, महामोहं कृत्स्नं भयावहम् ।
पर्यायधर्मं चाभिरोचयति, व्रतानि शीलानि परिषहांश्च ॥११॥

अहिंससच्चं च अतेणगं च, तत्तो य बम्भं अपरिग्गहं च ।
पडिवज्जिया पंच महव्वयाणि, चरिज्ज धम्मं जिणदेसियं विदू॥१२॥

अहिंसा सत्यं चास्तेनकं च, ततश्चाब्रह्मापरिग्रहं च ।
प्रतिपद्य पंचमहाव्रतानि, चरति धर्मं जिनदेशितं विद्वान् ॥१२॥

सव्वेहि भूएहिं दयाणुकम्पी, खन्तिक्खमे संजयबम्भयारी ।
सावज्जजोगं परिवज्जयन्तो, चरिज्ज भिक्खू सुसमाहिइंदिए ॥१३॥

सर्वेषु भूतेषु दयानुकम्पी, क्षान्तिक्षमः संयतब्रह्मचारी ।
सावद्ययोगं परिवर्जयन्, चरेद्भिक्षुः सुसमाहितेन्द्रियः ॥१३॥

[1] वध्यभूमिपरजता.

कालेण कालं विहरेज्ज रट्ठे, बलाबलं जाणिय अप्पणो य ।
सीहो व सद्देण न सन्तसेज्जा, वयजोग सुच्चा न असब्भमाहु ॥१४॥

कालेन कालं विहरेत् राष्ट्रे, बलमबलं ज्ञात्वाऽऽत्मनश्च ।
सिंह इव शब्देन न संत्रस्येत्, वाग्योगं श्रुत्वा नासभ्यं ब्रूयात्॥

उवेहमाणो उ परिव्वएज्जा, पियमप्पियं सव्व तितिक्खएज्जा ।
न सव्व सव्वत्थऽभिरोयएज्जा, न यावि पूयं गरहं च संजए॥१५॥

उपेक्षमाणस्तु परिव्रजेत्, प्रियमप्रियं सर्वं तितिक्षेत् ।
न सर्वं सर्वत्राभिरोचयेत्, न चापि पूजां गर्हां च संयतः॥१५॥

अणेगछन्दामिह माणवेहिं, जे भावओ संपगरेइ भिक्खू ।
भयभेरवा तत्थ उइन्ति भीमा, दिव्वा माणुस्सा अदुवा तिरिच्छा ॥

अनेकछंदांसीह मानवेषु, यान्भावतः संप्रकरोति भिक्षुः ।
भयभैरवास्तत्रोद्यन्ति भीमाः, दिव्या मानुष्या अथवा तैरश्चाः॥१६॥

परीसहा दुव्विसहा अणेगे, सीयन्ति जत्था बहुकायरा नरा ।
से तत्थ पत्ते न वहिज्ज भिक्खू, संगामसीसे इव नागराया ॥१७॥

परिषहा दुर्विषहा अनेके, सीदंति यत्र बहुकातरा नराः ।
स तत्र प्राप्तो नाव्यथत भिक्षुः, संग्रामशीर्षे इव नागराजः॥१७॥

सीओसिणा दंसमसा य फासा, आयंका विविहा फुसन्ति देहं ।
अकुक्कुओ तत्थऽहियासएज्जा, रयाइं खेवेज्ज पुरे कयाइं ॥१८॥

शीतोष्णा दंशमशकाश्च स्पर्शाः, आतंका विविधाश्च स्पृशंति देहम्।
अकुत्कुचस्तत्राधिसहेत, रजांसि क्षपयेत् पुराकृतानि ॥१८॥

पहाय रागं च तहेव दोसं, मोहं च भिक्खू सततं वियक्खणो ।
मेरु व्व वाएण अकम्पमाणो, परीसहे आयगुत्ते सहेज्जा ॥१९॥

प्रहाय रागं च तथैव द्वेषं, मोहं च भिक्षुः संततं विचक्षणः ।
मेरुरिव वातेनाकंपमानः, परिषहान् गुप्तात्मा सहेत ॥१९॥

अणुन्नए नावणए महेसी, न यावि पूयं गरहं च संजए ।
स उज्जुभावं पडिवज्ज संजए, निव्वाणमग्गं विरए उवेई ॥२०॥
अनुन्नतो नावनतो महर्षिः, न चापि पूजां गर्हां च संयतः ।
स ऋजुभावं प्रतिपद्य संयतः, निर्वाणमार्गं विरत उपैति॥२०॥

अरइरइसहे पहीणसंथवे, विरए आयहिए पहाणव ।
परमट्ठपएहिं चिट्ठई, छिन्नसोए अममे अकिंचणे ॥२१॥
अरतिरतिसहः प्रहीणसंस्तवः, विरत आत्महितः प्रधानवान् ।
परमार्थपदेषु तिष्ठति, छिन्नशोकोऽममोऽकिंचनः ॥२१॥

विवित्तलयणाइ भएज्ज ताई, निरोवलेवाइ असंथडाइं ।
इसीहिं चिण्णाइं महायसेहिं, काएण फासेज्ज परीसहाइं ॥२२॥
विविक्तलयनानि भजेत त्रायी, निरुपलेपान्यसंस्कृतानि ।
ऋषिभिश्चीर्णानि महायशोभिः, कायेन स्पृशति परिषहान्॥२२॥

सन्नाणनाणोवगए महेसी, अणुत्तरं चरिउं धम्मसंचयं ।
अणुत्तरे नाणधरे जसंसी, ओभासई सूरिए वन्तलिक्खे ॥२३॥
सज्ञानज्ञानोपगतो महर्षिः, अनुत्तरं चरित्वा धर्मसंचयम् ।
अनुत्तरो ज्ञानधरो यशस्वी, अवभासते सूर्य इवान्तरिक्षे॥२३॥

दुविहं खवेऊण य पुण्णपावं, निरंगणे सव्वओ विप्पमुक्के ।
तरित्ता समुद्दं व महाभवोघं समुद्दपाले अपुणागमं गए ॥२४॥
द्विविधं क्षपयित्वा च पुण्यपापं, निरंगनः सर्वतो विप्रमुक्तः ।
तीर्त्वा समुद्रमिव महाभवौघं, समुद्रपालोऽपुनरागमां गतः॥२४॥

॥ त्ति बेमि ॥ इति समुद्दपालीयं एगवीसइमं अज्झयणं समत्तं ॥२१॥
इति ब्रवीमि इति समुद्रपालीयमेकविंशमध्ययनं समाप्तं॥२१॥

## ॥ अह रहनेमिज्जं बावीसइमं अज्झयणं ॥

### ॥ अथ रथनेमीयं द्वाविंशमध्ययनं ॥

सोरियपुरम्मि नयरे, आसि राया महिड्ढिए ।
वसुदेवु त्ति नामेणं, रायलक्खणसंजुए ॥१॥
शौर्यपुरे नगरे, आसीद्राजा महर्द्धिकः ।
वसुदेव इति नाम्ना, राजलक्षणसंयुतः ॥१॥
तस्स भज्जा दुवे आसी, रोहिणी देवई तहा ।
तासिं दोण्हं दुवे पुत्ता, इट्ठा रामकेसवा ॥२॥
तस्य भार्ये द्वे आस्तां, रोहिणी देवकी तथा ।
तयोर्द्वयोर्द्वौ पुत्रौ, इष्टौ रामकेशवौ ॥२॥
सोरियपुरम्मि नयरे, आसि राया महिड्ढिए ।
समुद्दविजए नामं, रायलक्खणसंजुए ॥३॥
शौर्यपुरे नगरे, आसीद्राजा महर्द्धिकः ।
समुद्रविजयो नाम, राजलक्षणसंयुतः ॥३॥
तस्स भज्जा सिवा नाम, तीसे पुत्तो महायसो ।
भगवं अरिट्ठनेमि त्ति, लोगनाहे दमीसरे ॥४॥
तस्य भार्या शिवा नाम्नी, तस्याःपुत्रो महायशाः ।
भगवानरिष्टनेमिरिति, लोकनाथो दमीश्वरः ॥४॥
सोऽरिट्ठनेमिनामो उ, लक्खणस्सरसंजुओ ।
अट्ठसहस्सलक्खणधरो, गोयमो कालगच्छवी ॥५॥
स अरिष्टनेमिर्नामा तु, स्वरलक्षणसंयुतः ।
अष्टसहस्रलक्षणधरः, गौतमः कालकच्छविः ॥५॥
वज्जरिसहसंघयणो, समचउरंसो झसोयरो ।
तस्स रायमईकन्नं, भज्जं जायइ केसवो ॥६॥

वज्रर्षभनाराचसंहननः, समचतुरस्रो झषोदरः ।
तस्य राजीमती कन्यां, भार्यार्थं याचते केशवः ॥६॥

अह सा रायवरकन्ना, सुसीला चारुपेहणी ।
सव्वलक्खणसंपन्ना, विज्जुसोयामणिप्पभा ॥७॥
अथ सा राजवरकन्या, सुशीला चारुप्रेक्षिणी ।
सर्वलक्षणसंपन्ना, विद्युत्सौदामिनीप्रभा ॥७॥

अहाह जणओ तीसे, वासुदेवं महिड्ढियं ।
इहागच्छउकुमारो, जा से कन्नं दृदामि हं ॥८॥
अथाह जनकस्तस्याः, वासुदेवं महर्द्धिकम् ।
इहागच्छतु कुमारः, येन तस्मै कन्यां ददाम्यहं ॥८॥

सव्वोसहीहिं ण्हविओ, कयकोउयमंगलो ।
दिव्वजुयलपरिहिओ, आभरणेहिं विभूसिओ ॥९॥
सर्वौषधिभिः स्नपितः, कृतकौतुकमंगलः ।
दिव्ययुगलपरिहितः, आभरणैर्विभूषितः ॥९॥

मत्तं च गन्धहत्थिं, वासुदेवस्स जेट्ठगं ।
आरूढो सोहए अहियं, सिरे चूडामणी जहा ॥१०॥
मत्तं च गन्धहस्तिनं, वासुदेवस्य ज्येष्ठकम् ।
आरूढः शोभतेऽधिकं, शिरसि चूडामणिर्यथा ॥१०॥

अह ऊसिएण छत्तेण, चामराहि य सोहिए ।
दसारचक्केण य सो, सव्वओ परिवारिओ ॥११॥
अथोच्छ्रितेन छत्रेण, चामराभ्यां च शोभितः ।
दशार्हचक्रेण च सः, सर्वतः परिवारितः ॥११॥

चउरंगिणीए सेनाए, रइयाए जहक्कमं ।
तुरियाण सन्निनाएण, दिव्वेण गगणं फुसे ॥१२॥

चतुरंगिण्या सेनया, रचितया यथाक्रमम् ।
तूर्याणां सन्निनादेन, दिव्येन गगनस्पृशा ॥१२॥

एयारिसाए इड्ढीए, जुत्तीए उत्तमाइ य ।
नियगाओ भवणाओ, निज्जाओ वण्हिपुंगवो ॥१३॥
एतादृश्या ऋद्ध्या, द्युत्योत्तमया च ।
निजकाद् भवनात्, निर्यातो वृष्णिपुंगवः ॥१३॥

अह सो तत्थ निज्जन्तो, दिस्स पाणे भयद्दुए ।
वाडेहिं पंजरेहिं च, सन्निरुद्धे सुदुक्खिए ॥१४॥
अथ स तत्र निर्यन्, दृष्ट्वा प्राणिनो भयद्रुतान् ।
वाटकैः पञ्जरैश्च, सन्निरुद्धान् सुदुःखितान् ॥१४॥

जीवियन्तं तु सम्पत्ते, मंसट्ठा भक्खियव्वए ।
पासित्ता से महापन्ने, सारहिं इणमब्बवी ॥१५॥
जीवितान्तं तु संप्राप्तान्, मांसार्थं भक्षयितव्यान् ।
दृष्ट्वा स महाप्राज्ञः, सारथिमिदमब्रवीत् ॥१५॥

कस्स अट्ठा इमे पाणा, एए सव्वे सुहेसिणो ।
वाडेहिं पंजरेहिं च, सन्निरुद्धा य अच्छहिं ॥१६॥
कस्यार्थमिमे प्राणिनः, एते सर्वे सुखैषिणः ।
वाटकैः पञ्जरैश्च, सन्निरुद्धाश्च तिष्ठन्ति ॥१६॥

अह सारही तओ भणई, एए भद्दा उ पाणिणो ।
तुज्झ विवाहकज्जम्मि, भोयावेउं बहुं जणं ॥१७॥
अथ सारथिस्ततो भणति, एते भद्रास्तुप्राणिनः ।
युष्माकं विवाहकार्ये, भोजयितुं बहुं जनम् ॥१७॥

सोऊण तस्स वयणं, बहुपाणिविणासणं ।
चिन्तेइ से महापन्नो, साणुक्कोसे जिए हि ऊ ॥१८॥

श्रुत्वा तस्य वचनं, बहुप्राणिविनाशनम् ।
चिन्तयति स महाप्राज्ञः, [1]सानुक्रोशो जीवेषु तु ॥१८॥

जइ मज्झ कारणा एए, हम्मन्ति सुबहू जिया ।
न मे एयं तु निस्सेसं, परलोगे भविस्सई ॥१९॥

यदि मम कारणादेते, हनिष्यन्ते सुबहवो जीवाः ।
न मे एतन्निःश्रेयसं, परलोके भविष्यति ॥१९॥

सो कुण्डलाण जुयलं, सुत्तगं च महायसो ।
आभरणाणि य सव्वाणि, सारहिस्स पणामए ॥२०॥

स कुण्डलयोर्युगलं, सूत्रकं च महायशाः ।
आभरणानि च सर्वाणि, सारथये प्रणामयति ॥२०॥

मणपरिणामो य कओ, देवा य जहोइयं समोइण्णा ।
सव्वड्ढीइ सपरिसा, निक्खमणं तस्स काउं जे ॥२१॥

मनःपरिणामे च कृते, देवाश्च यथोचितं समवतीर्णाः ।
सर्वर्ध्या सपरिषदः, निष्क्रमणं तस्य कर्तुम् ये ॥२१॥

देवमणुस्सपरिवुडो, सिवियारयणं तओ समारूढो ।
निक्खमिय बारगाओ, रेवययंम्मि ट्ठिओ भगवं ॥२२॥

देवमनुष्यपरिवृतः, शिबिकारत्नं ततः समारूढः ।
निःक्रम्य द्वारकातः रैवतके, स्थितो भगवान् ॥२२॥

उज्जाणं संपत्तो, ओइण्णो उत्तमाउ सीयाओ ।
साहस्सीइ परिवुडो, अह निक्खमई उ चित्ताहिं ॥२३॥

उद्यानं संप्राप्तः, अवतीर्ण उत्तमायाः शिबिकायाः
सहस्रेण परिवृतः, अथ निःक्रामति तु चित्रानक्षत्रे ॥२३॥

अह से सुगन्धगन्धीए, तुरियं मउकुंचिए ।
सयमेव लुंचई केसे, पंचमुट्ठीहिं समाहिओ ॥२४॥

[1] दयावाळो.

अथ स सुगन्धगन्धिकान् , त्वरितं मृदुककुंचितान् ।
स्वयमेव लुञ्चति केशान् , पंचमुष्टिभिः समाहितः ॥२४॥

वासुदेवो य णं भणइ, लुत्तकेसं जिइन्दियं ।
इच्छियमणोरहं तुरियं, पावसु तं दमीसरा ॥२५॥
वासुदेवश्च (तं) भणति, लुप्तकेशं जितेन्द्रियम् ।
इप्सितमनोरथं त्वरितं, प्राप्नुहि त्वं दमीश्वर ! ॥२५॥

नाणेणं दंसणेणं च, चरित्तेण तहेव य ।
खन्तीए मुत्तीए, वड्ढमाणो भवाहि य ॥२६॥
ज्ञानेन दर्शनेन च, चारित्रेण तथैव च ।
क्षान्त्या मुक्त्या, वर्धमानो भव च ॥२६॥

एवं ते रामकेसवा, दसारा य बहू जणा ।
अरिट्ठनेमिं वन्दित्ता, अभिगया बारगापुरिं ॥२७॥
एवं तौ रामकेशवौ, दशार्हाश्च बहुजनाः ।
अरिष्टनेमिं वन्दित्वा, अभिगता द्वारकापुरीम् ॥२७॥

सोऊण रायकन्ना, पव्वज्जं सा जिणस्स उ ।
नीहासा य निराणन्दा, सोगेण उ समुत्थिया ॥२८॥
श्रुत्वा राजकन्या, प्रव्रज्यां सा जिनस्य तु ।
निर्हास्या च निरानन्दा, शोकेन तु (समवसृता) समुत्थिता॥२८॥

राईमई विचिन्तेइ. धिरत्थु मम जीवियं ।
जा हं तेण परिच्चत्ता, सेयं पव्वइउं मम ॥२९॥
राजीमती विचिन्तयति, धिगस्तु मम जीवितम् ।
याऽहं तेन परित्यक्ता, श्रेयः प्रव्रजितुं मम ॥२९॥

अह सा भमरसन्निभे. कुच्चफणगपसाहिए ।
सममेव लुंचई केसे, धिइमन्ता ववस्सिया ॥३०॥

अथ सा भ्रमरसन्निभान्, [1]कूर्चफनक[2]प्रसाधितान् ।
स्वयमेव लुंचति केशान्, धृतिमती व्यवसिता ॥३०॥

वासुदेवो य णं भणइ, लुत्तकेसं जिइन्दियं ।
संसारसागरं घोरं, तर कन्ने लहुं लहुं ॥३१॥
वासुदेवश्च तां भणति, लुप्तकेशां जितेन्द्रियाम् ।
संसारसागरं घोरं, तर कन्ये [3]लघुलघु ॥३१॥

सा पव्वइया सन्ती, पव्वावेसी तहिं बहुं ।
सयणं परियणं चेव, सीलवन्ता बहुस्सुया ॥३२॥
सा प्रव्रजिता सती, प्रव्राजयामास तत्रां बहून् ।
स्वजनान् परिजनांश्चेव, शीलवती बहुश्रुता ॥३२॥

गिरिं रेवतयं जन्ती, वासेणुल्ला उ अन्तरा ।
वासन्ते अन्धयारम्मि, अन्तो लयणस्स ठिया ॥३३॥
गिरिं रैवतकं यांती, वर्षेणार्द्रा त्वन्तरा ।
वर्षत्यन्धकारे, अन्तरा लयनस्य (सा) स्थिता ॥३३॥

चीवराइं विसारन्ती, जहा जाय त्ति पासिया ।
रहनेमी भग्गचित्तो, पच्छा दिट्ठो य तीइ वि ॥३४॥
चीवराणि विस्तारयन्ती, यथाजातेति दृष्ट्वा ।
रथनेमिर्भग्नचित्तः, पश्चाद् दृष्टश्च तयापि ॥३४॥

भीया य सा तहिं दट्ठुं, एगन्ते संजयं तयं ।
बाहाहि काउ संगोप्फं, वेवमाणी निसीयई ॥३५॥
भीता च सा तत्र दृष्ट्वा, एकान्ते संयतं तकं ।
बाहुभ्यां कृत्वा [4]संगोफं, वेपमाना निषीदति ॥३५॥

---

१ जाडा दांतावाळो लोखीश्रो. २ भीणादांतावाळी कांकसी. ३ जल्दी जल्दी. ४ अंगगोपन.

अह सो वि रायपुत्तो, समुद्दविजयंगओ।
भीयं पवेविय़ं दट्ठु, इमं वक्कं उदाहरे ॥३६॥

अथ सोऽपि राजपुत्रः, समुद्रविजयांगजः।
भीतां प्रवेपितां दृष्ट्वा, इदं वाक्यमुदाहृतवान् ॥३६॥

रहनेमी अहं भद्दे, सुरूवे चारुभासिणी।
ममं भयाहि सुतणु, न ते पीला भविस्सइ ॥३७॥

रथनेमिरहं भद्रे! सुरूपे! चारुभाषिणि!।
मां भजस्व सुतनो!, न ते पोडा भविष्यति ॥३७॥

एहि ता भुंजिमो भोए, माणुस्सं खु सुदुल्लहं।
भुत्तभोगी तओ पच्छा, जिणमग्गं चरिस्समो ॥३८॥

ऐहि तावद् भुञ्जीवहि भोगान्, मानुष्यं खलु सुदुर्लभम्।
भुक्तभोगौ ततः पश्चात्, जिनमार्गं चरिष्यावः ॥३८॥

दट्ठुण रहनेमि तं, भग्गुज्जोयपराजियं।
राईमई असम्भन्ता, अप्पाणं संवरे तहिं ॥३९॥

दृष्ट्वा रथनेमि तं, भग्नोद्योगपराजितम्।
राजीमत्यसंभ्रान्ता, आत्मानं समवारीत् तत्र ॥३९॥

अह सा रायवरकन्ना, सुट्ठिया नियमव्वए।
जाई कुलं च सीलं च, रक्खमाणी तयं वए ॥४०॥

अथ सा राजवरकन्या, सुस्थिता नियमव्रते।
जाति कुलं च शील च, रक्षन्ती तकमवदत् ॥४०॥

जइ सि रूवेण वेसमणो, ललिएण नलकुब्बरो।
तहा वि ते न इच्छामि, जइ सि सक्खं पुरंदरो ॥४१॥

यद्यसि रूपेण वैश्रमणः, ललितेन नलकूबरः।
तथापि त्वां नेच्छामि, यद्यसि साक्षात् पुरंदरः ॥४१॥

धिरत्थु तेऽजसोकामी, जो तं जीवियकारणा ।
वन्तं इच्छसि आवेउं, सेयं ते मरणं भवे ॥४२॥
धिगस्तु त्वामयशःकामिन्!, यत्त्वं जीवितकारणात् ।
वान्तमिच्छस्यापातुं, (अतः) श्रेयस्ते मरणं भवेत् ॥४२॥

अहं च भोगरायस्स, तं च सि अन्धगवण्हिणो ।
मा कुले गन्धणा होमो, संजमं निहुओ चर ॥४३॥
अहं च भोगराजस्य, त्वं चास्यन्धकवृष्णेः ।
मा कुले गन्धनानां भूव, संयमं निभृतश्चर ॥४३॥

जइ तं काहिसि भावं, जा जा दिच्छसि नारिओ ।
वायाविद्धो व्व हडो, अट्ठिअप्पा भविस्ससि ॥४४॥
यदि त्वं करिष्यसि भावं, या या द्रक्ष्यसि नारीः ।
वाताविद्ध इव हठः, अस्थितात्मा भविष्यसि ॥४४॥

गोवालो भण्डवालो वा, जहा तद्दव्वणिस्सरो ।
एवं अणिस्सरो तं पि, सामण्णस्स भविस्ससि ॥४५॥
गोपालो भण्डपालो वा, यथा तद्द्रव्यानीश्वरः ।
एवमनीश्वरस्त्वमपि, श्रामण्यस्य भविष्यसि ॥४५॥

तीसे सो वयणं सोच्चा, संजयाए सुभासियं ।
अंकुसेण जहा नागो, धम्मे संपडिवाइओ ॥४६॥
तस्याः स वचनं श्रुत्वा, संयताया सुभाषितम् ।
अंकुशेन यथा नागः, धर्मे सम्प्रतिपादितः ॥४६॥

मणगुत्तो वयगुत्तो, कायगुत्तो जिइन्दिओ ।
सामण्णं निच्चलं फासे, जावज्जीवं दढव्वओ ॥४७॥
मनोगुप्तो वचोगुप्तः, कायगुप्तो जितेन्द्रियः ।
श्रामण्यं निश्चलमस्प्राक्षीत्, यावज्जीवं दृढव्रतः ॥४७॥

उग्गं तवं चरित्ताणं, जाया दोण्णि वि केवली ।
सव्वं कम्मं खवित्ताणं, सिद्धिं पत्ता अणुत्तरं ॥४८॥

उग्रं तपश्चरित्वा, जातौ द्वावपि केवलिनौ ।
सर्वं कर्म क्षपयित्वा, सिद्धिं प्राप्तावनुत्तराम् ॥४८॥

एवं करेन्ति संबुद्धा, पण्डिया पवियक्खणा ।
विणियट्टन्ति भोगेसु, जहा सो पुरिसोत्तमो ॥४९॥

एवं कुर्वन्ति संबुद्धाः, पण्डिताः प्रविचक्षणाः ।
विनिवर्तन्ते भोगेभ्यः, यथा सः पुरुषोत्तमः ॥४९॥

इत्ति बेमि॥ रहनेमिज्जंबावीसइमं अज्झयणं समत्तं ॥२२॥
इति ब्रवीमि रथनेमीयं द्वाविंशतितममध्ययनं समाप्तं ॥

## ॥ अह केसिगोयमिज्जं तेवीसइमं अज्झयणं ॥

### अथ केशिगौतमीयं त्रयोविंशमध्ययनं ॥

जिणे पासि त्ति नामेण, अरहा लोगपूइओ ।
संबुद्धप्पा य सव्वन्नू, धम्मतित्थयरे जिणे ॥१॥

जिनः पार्श्व इति नाम्ना, अर्हन्लोकपूजितः ।
संबुद्धात्मा च सर्वज्ञः धर्मतीर्थकरो जिनः ॥१॥

तस्स लोगपदीवस्स, आसि सीसे महायसे ।
केसी कुमारसमणे, विज्जाचरणपारगे ॥२॥

तस्य लोकप्रदीपस्य, आसीच्छिष्यो महायशाः ।
केशी कुमारश्रमणः, विद्याचरणपारगः ॥२॥

ओहिनाणसुए वुध्धे, सीससंघसमाउले ।
गामाणुगामं रीयन्ते, सावत्थिं पुरमागए ॥३॥

अवधिज्ञानश्रुताभ्यां बुद्धः, शिष्यसंघसमाकुलः ।
ग्रामानुग्रामं रीयमाणः, श्रावस्ती नगरीमागतः ॥३॥

तिन्दुयं नाम उज्जाणं, तम्मी नगरमण्डले ।
फासुए सिज्जसंथारे, तत्थ वासमुवागए ॥४॥
तिन्दुकं नामोद्यानं, तस्या नगरमण्डले ।
प्रासुके शय्यासंस्तारे, तत्र वासमुपागतः ॥४॥
अह तेणेव कालेणं, धम्मतित्थयरे जिणे ।
भगवं वद्धमाणि त्ति, सव्वलोगम्मि विस्सुए ॥५॥
अथ तस्मिन्नेव काले, धर्मतीर्थंकरो जिनः ।
भगवान् वर्धमान इति, सर्वलोके विश्रुतः ॥५॥
तस्स लोगपईवस्स, आसि सीसे महायसे ।
भगवं गोयमे नामं, विज्जाचरणपारए ॥६॥
तस्य लोकप्रदीपस्य, आसीच्छिष्यो महायशाः ।
भगवान्गौतमो नाम, विद्याचरणपारगः ॥६॥
बारसंगविऊ बुद्धे, सीससंघसमाउले ।
गामाणुगामं रीयन्ते, से वि सावत्थिमागए ॥७॥
द्वादशाङ्गविद् बुद्धः, शिष्यसंघसमाकुलः ।
ग्रामानुग्रामं रीयमाणः, सोऽपि श्रावस्तीमागतः ॥७॥
कोट्ठगं नाम उज्जाणं, तम्मी नगरमण्डले ।
फासुए सिज्जसंथारे, तत्थ वासमुवागए ॥८॥
कोष्टकं नामोद्यानं, तस्या नगरमण्डले ।
प्रासुके शय्यासंस्तारे, तत्र वासमुपागतः ॥८॥
केसी कुमारसमणे, गोयमे य महायसे ।
उभओ वि तत्थ विहरिंसु, अल्लीणा सुसमाहिया ॥९॥
केशी कुमारश्रमणः, गौतमश्च महायशाः ।
उभावपि तत्र व्यहार्ष्टाम्, आलीनौ सुसमाहितौ ॥९॥

उभओ सीससंघाणं, संजयाणं तवस्सिणं ।
तत्थ चिन्ता समुप्पन्ना, गुणवन्ताण ताइणं ॥१०॥
उभयोः शिष्यसंघानां, संयतानां तपस्विनाम् ।
तत्र चिन्ता समुत्पन्ना, गुणवतां त्रायिणाम् ॥१०॥

केरिसो वा इमो धम्मो, इमो धम्मो व केरिसो ।
आयारधम्मपणिही, इमा वा सा व केरिसी ॥११॥
कीदृशो वायं धर्मः, अयं धर्मो वा कीदृशः ।
आचारधर्मप्रणिधिः , अयं वा स वा कीदृशः ॥११॥

चाउज्जामो य जो धम्मो, जो इमो पंचसिक्खिओ ।
देसिओ वद्धमाणेण पासेण य महामुणी ॥१२॥
चतुर्यामश्च यो धर्मः, योऽयं [1]पंचशिक्षितः ।
देशितो वर्धमानेन, पार्श्वेण च महामुनिना ॥१२॥

अचेलओ य जो धम्मो, जो इमो सन्तरुत्तरो ।
एगकज्जपवन्नाणं, विसेसे किं नु कारणं ॥१३॥
[2]अचेलकश्च यो धर्मः, योऽयं [3]सांतरोत्तरः ।
एककार्यप्रपन्नयोः, विशेषे किंनु कारणम् ॥१३॥

अह ते तत्थ सीसाणं, विन्नाय पवितक्कियं ।
समागमे कयमई, उभओ केसिगोयमा ॥१४॥
अथ तौ तत्र शिष्याणां, विज्ञाय प्रवितर्कितम् ।
समागमे कृतमती, उभौ केशिगौतमौ ॥१४॥

गोयमे पडिरुवन्नू, सीससंघसमाउले ।
जेट्ठं कुलमवेक्खन्तो, तिन्दुयं वणमागओ ॥१५॥

१ पांच महाव्रतयुक्त. २ अल्पोपधिवालो. ३ महावीर स्वामी कर्तां उत्तम वस्त्रादि सामग्री प्ररुपनार.

गौतमः [1]प्रतिरूपज्ञः, शिष्यसंघसमाकुलः ।
ज्येष्ठं कुलमपेक्षमाणः, तिन्दुकं वनमागतः ॥१५॥

केसी कुमारसमणे, गोयमं दिस्समागयं ।
पडिरूवं पडिवत्तिं, सम्मं संपडिवज्जई ॥१६॥
केशी कुमारश्रमणः, गौतमं दृष्ट्वागतम् ।
[2]प्रतिरूपां प्रतिपत्तिम, सम्यक् संप्रतिपद्यते ॥१६॥

पलालं फासुयं तत्थ, पंचमं कुसतणाणि य ।
गोयमस्स निसेज्जाए, खिप्पं संपणामए ॥१७॥
पलालं प्रासुकं तत्र, पंचमं कुशतृणानि च ।
गौतमस्य निषद्यायै, क्षिप्रं संप्रणामयति ॥१७॥

केसी कुमारसमणे, गोयमे य महायसे ।
उभओ निसण्णा सोहन्ति, चन्दसूरसमप्पभा ॥१८॥
केशी कुमारश्रमणः, गौतमश्च महायशाः ।
उभौ निषण्णौ शोभेते, चन्द्रसूर्यसमप्रभौ ॥१८॥

समागया बहू तत्थ, पासंडा कोउगा मिया ।
गिहत्थाणं अणेगाओ, साहस्सीओ समागया ॥१९॥
समागता बहवस्तत्र, पाषण्डाः कौतुकान् मृगाः ।
ग्रहस्थानामनेकानां, सहस्राणि समागतानि ॥१९॥

देवदाणवगन्धव्वा, जक्खरक्खसकिन्नरा ।
अदिस्साणं च भूयाणं, आसी तत्थ समागमो ॥२०॥
देवदानवगन्धर्वाः, यक्षराक्षसकिन्नराः ।
अदृश्यानां च भूतानां, आसीत्तत्र समागमः ॥२०॥

पुच्छामि ते महाभाग, केसी गोयममब्बवी ।
तओ केसिं बुवन्तं तु, गोयमो इणमब्बवी ॥२१॥

1 विनयताजाण. 2 योग्य.

पृच्छामि त्वां महाभाग! केशी गौतममब्रवीत् ।
ततः केशिन ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥॥२१॥
पुच्छ भन्ते जहिच्छं ते, केसिं गोयममब्बवी ।
तओ केसी अणुन्नए, गोयमं इणमब्बवी ॥२२॥
पृच्छतु भदन्त! यथेष्टं ते, केशिनं गौतमोऽब्रवीत् ।
ततः केशी अनुज्ञातः, गौतममिदमब्रवीत् ॥२२॥
चाउज्जामो य जो धम्मो, जो इमो पंचसिक्खिओ ।
देसिओ वद्धमाणेण, पासेण य महामुणी ॥२३॥
चतुर्यामश्च यो धर्मः, योऽयं पंचशिक्षितः ।
देशितो वर्धमानेन, पार्श्वेण च महामुनिना ॥२३॥
एगकज्जपवन्नाणं, विसेसे किं नु कारणं, ।
धम्मे दुविहे मेहावी, कहं विप्पच्चओ न ते ॥२४॥
एककार्यप्रपन्नयोः, विशेषे किन्नु कारणम् ।
धर्मे द्विविधे मेधाविन्! कथं [1]विप्रत्ययो न ते (तव) ॥२४॥
तओ केसि वुवन्तं तु, गोयमो इणमब्बवी ।
पन्ना समिक्खए धम्म, तत्तं तत्तविणिच्छियं ॥२५॥
ततः केशिनं ब्रुवन्तं तु, गौतम इदमब्रवीत् ।
प्रज्ञा समीक्षते, धर्मतत्त्व तत्त्वविनिश्चयं ॥२५॥
पुरिमा उज्जुजडा उ, वंकजडा य पच्छिमा ।
मज्झिमा उज्जुपन्ना उ, तेण धम्मे दुहा कए ॥२६॥
पूर्वे ऋजुजडास्तु, वक्रजडाश्च [2]पश्चिमाः ।
मध्यमा ऋजुप्रज्ञास्तु, तेन धर्मो द्विधाकृतः ॥२६॥
पुरिमाणं दुव्विसोज्झो उ, चरिमाणं दुरणुपालओ ।
कप्पो मज्झिमगाणं तु, सुविसोज्झो सुपालओ ॥२७॥

१ मविश्वास (सन्देह) २ चरम तीर्थंकरना अनुयायीओ.

पूर्वेषां दुर्विशोध्यस्तु चरमाणां दुरनुपालकः ।
कल्पो मध्यमगानां तु, सुविशोध्यः सुपालकः ॥२७॥

साहु गोयम! पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥२८॥
साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयोऽयम् ।
अन्योऽपि संशयो मे, तं मां कथय गौतम? ॥२८॥

अचेलगो य जो धम्मो, जो इमो सन्तरुत्तरो ।
देसिओ वद्धमाणेण, पासेण य महाजसा ॥२९॥
अचेलकश्च यो धर्मः, योऽयं सान्तरोत्तरः ।
देशितो वर्धमानेन, पार्श्वेण च महायशसा ॥२९॥

एगकज्जपवन्नाणं, विसेसे किं नु कारणं ।
लिंगे दुविहे मेहावी, कहं विप्पच्चओ न ते ॥३०॥
एककार्यप्रपन्नयोः, विशेषे किन्तु कारणम् ।
लिंगे द्विविधे मेधाविन्! कथं विप्रत्ययो न ते ॥३०॥

केसिमेवं बुवाणं तु, गोयमो इणमब्बवी ।
विन्नाणेण समागम्म, धम्मसाहणमिच्छियं ॥३१॥
केशिनमेवं ब्रुवाणं तु, गौतम इदमब्रवीत् ।
विज्ञानेन समागम्य, धर्मसाधनमिष्टम् ॥३१॥

पच्चयत्थं च लोगस्स, नाणाविहविगप्पणं ।
जत्तत्थं गहणत्थं च, लोगे लिंगपओयणं ॥३२॥
प्रत्ययार्थं च लोकस्य, नानाविधविकल्पनम् ।
यात्रार्थं [1]ग्रहणार्थं च, लोके लिंगप्रयोजनम् ॥३२॥

अह भवे पइन्ना उ, मोक्खसब्भूयसाहणा ।
नाणं च दंसणं चेव, चरित्तं चेव निच्छए ॥३३॥

1 पोते साधु छे तेवु भान रहे माटे.

अथ भवेत्प्रतिज्ञा तु, मोक्षसद्भूतसाधनानि ।
ज्ञानं च दर्शनं चैव, चारित्रं चैव [1]निश्चये ॥३३॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥३४॥
साधु गौतम ! प्रज्ञा ते, छिन्नो मे संशयोऽयम् ।
अन्योऽपि संशयो मम, तं मां कथय गौतम ! ॥३४॥

अणेगाणं सहस्साणं, मज्झे चिट्ठसि गोयमा ।
ते य ते अहिगच्छन्ति, कहं ते निज्जिया तुमे ॥३५॥
अनेकानां सहस्राणां, मध्ये तिष्ठसि गौतम ! ।
ते च त्वामभिगच्छन्ति, कथं ते निर्जितास्त्वया ॥३५॥

एगे जिए जिया पंच, पंचजिए जिया दस ।
दसहा उ जिणित्ताणं, सव्वसत्तू जिणामहं ॥३६॥
एकस्मिन् जिते जिताः पंच, पंचसु जितेषु जिता दश ।
दशधा तु जित्वा, सर्वशत्रून् जयाम्यहम् ॥३६॥

सत्तू य इइ के वुत्ते, केसी गोयममब्बवी ।
तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥३७॥
शत्रवश्च इति के उक्ताः, केशी गौतममब्रवीत् ।
ततः केशिनं ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥३७॥

एगप्पा अजिए सत्तू, कसाया इन्दियाणि य ।
ते जिणित्तु जहानायं, विहरामि अहं मुणी ॥३८॥
एक आत्माऽजितः शत्रुः, कषाया इन्द्रियाणि च ।
तान् जित्वा यथान्यायं, विहराम्यहं मुने ! ॥३८॥

[1] निश्चयनयथी तो ज्ञानादिज मोक्षनां साधन छे.

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥३९॥
साधु गौतम ! प्रज्ञा ते, छिन्नो मे संशयोऽयम् ।
अन्योऽपि संशयो मम, तं मां कथय गौतम ! ॥३९॥

दीसन्ति बहवे लोए, पासबद्धा सरीरिणो ।
मुक्कपासो लहुब्भूओ, कहं तं विहरसी मुणी ॥४०॥
दृश्यन्ते बहवो लोके, पाशबद्धाः शरीरिणः ।
मुक्तपाशो लघूभूतः, कथं त्वं विहरसि मुने ! ॥४०॥

ते पासे सव्वसो छित्ता, निहन्तूण उवायओ ।
मुक्कपासो लहुब्भूओ, विहरामि अहं मुणी ॥४१॥
तान् पाशान् सर्वशः छित्त्वा, निहत्योपायतः ।
मुक्तपाशो लघूभूतः, विहराम्यहं मुने ॥४१॥

पासा य इइ के वुत्ता, केसी गोयममब्बवी ।
केसिमेवं बुवंतं तु, गोयमो इणमब्बवी ॥४२॥
पाशाश्चेति क उक्ताः, केशी गौतममब्रवीत् ।
केशिनमेवं ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥४२॥

रागद्दोसादओ तिव्वा, नेहपासा भयंकरा ।
ते छिन्दित्ता जहानायं, विहरामि जहक्कमं ॥४३॥
रागद्वेषादयस्तीव्राः, स्नेहपाशा भयंकराः ।
तान्छित्त्वा यथान्यायं, विहरामि यथाक्रमम् ॥४३॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥४४॥
साधु गौतम ! प्रज्ञा ते, छिन्नो मे संशयोऽयम् ।
अन्योऽपि संशयो मम, तं मां कथय गौतम ! ॥४४॥

अन्तोहिअयसंभूया, लया चिट्ठइ गोयमा ।
फलेइ विसभक्खीणि, सा उ उद्धरिया कहं    ॥४५॥
  अन्तर्हृदयसंभूता, लता तिष्ठति गौतम ! ।
  फलति [1]विषभद्याणि, सा तूधृता कथम्    ॥४५॥
तं लयं सव्वसो छित्ता, उद्धरित्ता समूलियं ।
विहरामि जहानायं, मुक्को मि विसभक्खणं    ॥४६॥
  तां लता सर्वतच्छित्त्वा, उध्धृत्य समूलिकाम् ।
  विहरामि यथान्यायं, मुक्तोऽस्मि विषभक्षणात्    ॥४६॥
लया य इइ का वुत्ता, केसी गोयममब्बवी ।
केसिमेवं बुवंतं तु, गोयमो इणमब्बवी    ॥४७॥
  लता चेति कोक्ता, केशी गौतममब्रवीत् ।
  केशिनमेवं ब्रुवन्तं तु, गौतम इदमब्रवीत् ।    ॥४७॥
भवतण्हा लया वुत्ता, भीमा भीमफलोदया ।
तमुच्छित्तु जहानायं, विहरामि महामुणी    ॥४८॥
  भवतृष्णा लतोक्ता, भीमा भीमफलोदया ।
  तामुच्छित्य यथान्यायं, विहरामि महामुने!    ॥४८॥
साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा    ॥४९॥
  साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयोऽयम्
  अन्योऽपि संशयो मम, तं मां कथय गौतम !    ॥४९॥
संपज्जलिया घोरा, अग्गी चिट्ठइ गोयमा ।
जे डहन्ति सरीरत्थे, कहं विज्झाविया तुमे    ॥५०॥
  संप्रज्वलिता घोराः, अग्नयस्तिष्ठन्ति गौतम ! ।
  ये दहन्ति शरीरस्थाः, कथं [2]विध्यापितास्त्वया    ॥५०॥

1 विष फलोने. 2 शांतकरी

महामेहप्पसूयाओ, गिज्झ वारि-जलुत्तमं ।
सिंचामि सययं देहं, सित्ता नो डहन्ति मे ॥५१॥

महामेघप्रसूतात्, गृहीत्वा वारि जलोत्तमम् ।
सिंचामि सततं देहं, सिक्ता नो च दहन्ति माम् ॥५१॥

अग्गी य इइ के वुत्ता, केसी गोयममब्बवी ।
केसीमेवं बुवंतं तु, गोयमो इणमब्बवी ॥५२॥

अग्नयश्चेति क उक्ताः, केशी गौतममब्रवीत् ।
केशिनमेवं ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥५२॥

कसाया अग्गिणो वुत्ता, सुयसीलतवो जलं ।
सुयधाराभिहया सन्ता, भिन्ना हु न डहन्ति मे ॥५३॥

कषाया अग्नय उक्ताः, श्रुतशीलतपो जलम् ।
श्रुतधाराभिहताः सन्तः, भिन्नाः खलु न दहंति माम् ॥५३॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥५४॥

साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयोऽयम् ।
अन्योऽपि संशयो मम, तं मां कथय गौतम ! ॥५४॥

अयं साहसिओ भीमो, दुट्ठस्सो परिधावई ।
जंसि गोयमआरूढो, कहं तेण न हीरसि ॥५५॥

अयं साहसिको भीमः, दुष्टाश्वः परिधावति ।
यस्मिन् गौतम ! आरूढः, कथं तेन न ह्रियसे ॥५५॥

पधावन्तं निगिण्हामि, सुयरस्सीसमाहियं ।
न मे गच्छइ उम्मग्गं, मग्गं च पडिवज्जइ ॥५६॥

प्रधावन्तं निगृह्णामि, श्रुतरश्मिसमाहितम् ।
न मे गच्छत्युन्मार्गं, मार्गं च प्रतिपद्यते ॥५६॥

आसे य इइ के वुत्ते, केसी गोयममब्ववी ।
केसीमेवं वुवंतं तु, गोयमो इणमब्ववी ॥५७॥
अश्वश्चेति क उक्तः, केशी गौतममब्रवीत् ।
केशिनमेवं ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥५७॥

मणो साहसीओ भीमो, दुट्ठस्सो परिधावई ।
तं सम्मं तु निगिण्हामि, धम्मसिक्खाइ कन्थगं ॥५८॥
मनः साहसिको भीमः, दुष्टाश्वः परिधावति ।
तं सम्यक् तु निगृह्णामि, धर्मशिक्षायै कंथकं (इव) ॥५८॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥५९॥
साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयोऽयम्।
अन्योऽपि संशयो मम, तं मां कथय गौतम! ॥५९॥

कुप्पहा वहवो लोए, जेहिं नासन्ति जन्तुणो ।
अद्धाणे कहं वट्टन्तो, तं न नाससि गोयमा ॥६०॥
[1]कुपथा बहवो लोके, यैर्नश्यन्ति जन्तवः ।
अध्वनि कथं वर्तमानः, त्वं न नश्यसि गौतम? ॥६०॥

जे य मग्गेण गच्छंति, जे य उम्मग्गपट्ठिया ।
ते सव्वे वेइया मज्झं, तो न नस्सामहं मुणी ॥६१॥
ये च मार्गेण गच्छन्ति, ये चोन्मार्गप्रस्थिताः ।
ते सर्वे विदिता मया, तस्मान्न नश्याम्यहं मुने! ॥६१॥

मग्गे य इइ के वुत्ते, केसी गोयममब्ववी ।
केसिमेवं वुवंतं तु, गोयमो इणमब्ववी ॥६२॥
मार्गश्चेति क उक्तः, केशी गौतममब्रवीत् ।
केशिनमेवं ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥६२॥

---

१ खोटा रस्ताओ.

कुप्पवयणपासण्डी, सव्वे उम्मग्गपट्ठिया ।
सम्मग्गं तु जिणक्खायं, एस मग्गे हि उत्तमे ॥६३॥
[1]कुप्रवचनपाषण्डिनः, सर्वे उन्मार्गप्रस्थिताः ।
सन्मार्गं तु जिनाख्यातं, (जानीहि)एष मार्गो ह्युत्तमः ॥६३॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥६४॥
साधु गौतम ! प्रज्ञा ते, छिन्नो मे संशयो ऽयम् ।
अन्योपि संशयो मम, तं मां कथय गौतम ! ॥६४॥

महाउदगवेगेण, वुज्झमाणाण पाणिणं ।
सरणं गई पइट्ठा य, दीवं कं मन्नसी मुणी ॥६५॥
महोदकवेगेन, वाह्यमानानां प्राणिनाम् ।
शरणं गति प्रतिष्ठां च, द्वीपं कं मन्यसे मुने ? ॥६५॥

अत्थि एगो महादीवो, वारिमज्झे महालओ ।
महाउदगवेगस्स, गई तत्थ न विज्जई ॥६६॥
अस्त्येको महाद्वीपः, वारिमध्ये महालयः ।
महोदकवेगस्य, गतिस्तत्र न विद्यते ॥६६॥

दीवे य इइ के वुत्ते, केसी गोयममब्बवी ।
केसिमेवं बुवंतं तु, गोयमो इणमब्बवी ॥६७॥
द्वीप चेति क उक्तः, केशी गौतममब्रवीत् ।
केशिनमेवं ब्रुवन्तं तु, गोतम इदमब्रवीत् ॥६७॥

जरामरणवेगेणं, वुज्झमाणाण पाणिणं ।
धम्मो दीवो पइट्ठा य, गई सरणमुत्तमं ॥६८॥
जरामरणवेगेन, वाह्यमानानां प्राणिनाम् ।
धर्मो द्वीपः प्रतिष्ठा च, गतिः शरणमुत्तमम् ॥६८॥

---

१ कुदर्शनवादीओ

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥६९॥

साधु गौतम प्रज्ञा ते, छिन्नो मे संशयोऽयम्।
अन्योऽपि संशयो मम, तं मां कथय गौतम ? ॥६९॥

अण्णवंसि महोहंसि, नावा विपरिधावई।
जंसि गोयममारूढो, कहं पारं गमिस्ससि ॥७०॥

अर्णवे महौघे, नौर्विपरिधावति।
यस्यां गौतम आरूढः, कथं पारं गमिष्यसि ॥७०॥

जा उ अस्साविणी नावा, न सा पारस्स गामिणी।
जा निरस्साविणी नावा, सा उ पारस्स गामिणी ॥७१॥

या [1]त्वास्राविणी नौः, न सा पारस्य गामिनी।
या निरास्राविणी नौः, सा तु पारस्य गामिनी ॥७१॥

नावा य इइ का वुत्ता, केसी गोयममब्बवी।
केसीमेवं वुवंतं तु, गोयमो इणमब्बवी ॥७२॥

नौश्चेति कोक्ता, केशी गौतममब्रवीत्।
केशिनमेवं ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥७२॥

सरीरमाहु नाव त्ति, जीवो वुच्चइ नाविओ।
संसारो अण्णवो वुत्तो, जं तरंति महेसिणो ॥७३॥

शरीरमाहुर्नौरिति, जीव उच्यते नाविकः।
संसारोऽर्णव उक्तः, यं तरन्ति महर्षयः ॥७३॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥७४॥

साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयोऽयम्।
अन्योऽपि संशयो मम, तं मां कथय गौतम ? ॥७४॥

1 छिद्राश्री.

अन्धयारे तमे घोरे, चिट्ठन्ति पाणिणो बहू ।
को करिस्सइ उज्जोयं, सव्वलोयम्मि पाणिणं ॥७५॥

अन्धकारे तमसि घोरे, तिष्ठन्ति प्राणिनो बहवः ।
कः करिष्यत्युद्योतं, सर्वलोके प्राणिनाम् ॥७५॥

उग्गओ विमलो भाणू, सव्वलोयपभंकरो ।
सो करिस्सइ उज्जोयं, सव्वलोयम्मि पाणिणं ॥७६॥

उद्गतो विमलो भानुः, सर्वलोकप्रभाकरः ।
सः करिष्यत्युद्योतं, सर्वलोके प्राणिनाम् ॥७६॥

भाणु य इइ के वुत्ते, केसी गोयममब्बवी ।
केसिमेवं बुवंतं तु गोयमो इणमब्बवी ॥७७॥

भानुश्चेति क उक्तः, केशी गौतममब्रवीत् ।
केशिनमेवं ब्रुवन्तं तु, गौतम इदमब्रवीत् ॥७७॥

उग्गओ खीणसंसारो, सव्वन्नू जिणभक्खरो ।
सो करिस्सइ उज्जोयं, सव्वलोयम्मि पाणिणं ॥७८॥

[1]उद्गतः क्षीणसंसारः, सर्वज्ञो जिनभास्करः ।
स करिष्यत्युद्योतं, सर्वलोके प्राणिनाम् ॥७८॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
अन्नो वि संसओ मज्झं, तं मे कहसु गोयमा ॥७९॥

साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयोऽयम् ।
अन्योऽपि संशयो मम, तं मां कथय गौतम? ॥७९॥

सारीरमाणसे दुक्खे, बज्झमाणाण पाणिणं ।
खेमं सिवमणाबाहं, ठाणं किं मन्नसी मुणी ॥८०॥

शारीरमानसैर्दुःखैः, बाध्यमानानां प्राणिनाम् ।
क्षेमं शिवमनाबाधं, स्थानं किं मन्यसे मुने? ॥८०॥

१ उगेलो.

अत्थि एगं धुवं ठाणं लोगग्गम्मि दुरारुहं ।
जत्थ नत्थि जरामच्चू, वाहिणो वेयणा तहा ॥८१॥
अस्त्येकं ध्रुवं स्थानं, लोकाग्रे दुरारोहम् ।
यत्र नास्ति जरामृत्यू, व्याधयो वेदनास्तथा ॥८१॥

ठाणे य इइ के वुत्ते, केसी गोयममब्बवी ।
केसिमेवं वुवंतं तु, गोयमो इणमब्बवी ॥८२॥
स्थानं चेति किमुक्तं, केशी गौतममब्रवीत् ।
केशिनमेवं ब्रुवन्तं तु, गौतमइदमब्रवीत् ॥८२॥

निव्वाणं ति अवाहं ति, सिद्धी लोगग्गमेव य ।
खेमं सिवं अणावाहं, जं चरंति महेसिणो ॥८३॥
निर्वाणमित्यवाधमिति, सिद्धिर्लोकाग्रमेव च ।
क्षेमं शिवमनावाधं, यच्चरन्ति महर्षयः ॥८३॥

तं ठाणं सासयं वासं, लोयग्गम्मि दुरारुहं ।
जं संपत्ता न सोयन्ति, भवोहन्तकरा मुणी ॥८४॥
तत् स्थानं शाश्वतावासं, लोकाग्रे दुरारोहम् ।
यत्सम्प्राप्ता न शोचन्ति, भवौघान्तकरा मुने ! ॥८४॥

साहु गोयम पन्ना ते, छिन्नो मे संसओ इमो ।
नमो ते संसयातीत, सव्वसुत्तमहोयही ॥८५॥
साधु गौतम ! प्रज्ञा ते, छिन्नो मे संशयोऽयम् ।
नमस्तुभ्य संशयातीत ! सर्वसूत्रमहोदधे ! ॥८५॥

एवं तु संसए छिन्ने, केसी घोरपरक्कमे ।
अभिवन्दित्ता सिरसा, गोयमं तु महायसं ॥८६॥
एवं तु संशये छिन्ने, केशी घोरपराक्रमः ।
अभिवन्द्य शिरसा, गौतमं तु महायशसम् ॥८६॥

पंचमहव्वयधम्मं, पडिवज्जइ भावओ ।
पुरिमस्स पच्छिमम्मि, मग्गे तत्थ सुहावहे ॥८७॥

पंचमहाव्रतधर्मं, प्रतिपद्यते भावतः ।
पूर्वस्य पश्चिमे, मार्गे तत्र सुखावहे ॥८७॥

केसीगोयमओ निच्चं, तम्मि आसि समागमे ।
सुयसीलसमुक्करिसो, महत्थत्थविणिच्छओ ॥८८॥

केशिगौतमयोर्नित्यं, तस्मिन्नासीद् समागमः ।
श्रुतशीलसमुत्कर्षः, [1]महार्थार्थविनिश्चयः ॥८८॥

तोसिया परिसा सव्वा, सम्मग्गं समुवट्ठिया ।
संथुया ते पसीयन्तु, भयवं केसिगोयमे ॥८९॥

तोषिता परिषत्सर्वा, सन्मार्गं समुपस्थिता ।
संस्तुतौ तौ प्रसीदताम्, भगवन्तौ केशीगौतमौ ॥८९॥

॥ त्ति बेमि ॥ केसिगोयमिज्ज तेवीसइमं अज्झयणं समत्तं ॥२३॥

इतिब्रवीमि केशिगौतमीयं त्रयोविंशमध्ययनं समाप्तं ॥२३॥

---

## ॥ अह समिइओ चउवीसइमं अज्झयणं ॥

### ॥ अथ समितयः (इति) चतुर्विंशमध्ययनं ॥

अट्ठ पवयणमायाओ, समिई गुत्ती तहेव य ।
पंचेव य समिईओ, तओ गुत्तीउ आहिआ ॥१॥

अष्टौ प्रवचनमातरः, समितयो गुप्तयस्तथैव च ।
पंचैव च समितयः, तिस्रो गुप्तय आख्याताः ॥१॥

इरियाभासेसणादाणे, उच्चारे समिई इय ।
मणगुत्ती वयगुत्ती, कायगुत्ती य अट्ठमा ॥२॥

---

१ निश्चयात्मको निर्णयः

इर्याभाषैषणादानोच्चाररूपाः समितय इति ।
मनोगुप्तिर्वचोगुप्तिः, कायगुप्तिश्चाष्टमा ॥२॥

एयाओ अट्ठ समिईओ, समासेण वियाहिया ।
दुवालसंगं जिणक्खायं, मायं जत्थं उ पवयणं ॥३॥
एता अष्टौ समितयः, समासेन व्याख्याताः ।
द्वादशांगं जिनाख्यातं, [1]मातं यत्र तु प्रवचनम् ॥३॥

आलम्बणेण कालेण, मग्गेण जयणाइ य ।
चउकारणपरिसुद्धं, संजए इरियं रिए ॥४॥
आलंबनेन कालेन, मार्गेण यतनया च ।
चतुःकारणपरिशुध्धां, संयत ईर्या रीयेत ॥४॥

तत्थ आलम्बवणं नाणं, दंसणं चरणं तहा ।
काले य दिवसे वुत्ते, मग्गे उप्पहवज्जिए ॥५॥
तत्रालम्बनं ज्ञानं, दर्शनं चरणं तथा ।
कालश्च दिवस उक्तः, मार्ग उत्पथवर्जितः ॥५॥

दव्वओ खेत्तओ चेव, कालओ भावओ तहा ।
जयणा चउव्विहा वुत्ता, तं मे कित्तयओ सुण ॥६॥
द्रव्यतः क्षेत्रतश्चैव, कालतो भावतस्तथा ।
यतनाश्चतुर्विधा उक्ताः, ता मे कीर्तयतः शृणु ॥६॥

दव्वओ चक्खुसा पेहे, जुगमित्तं च खेत्तओ ।
कालओ जाव रीइज्जा, उवउत्ते य भावओ ॥७॥
द्रव्यतश्चक्षुषा प्रेक्षेत, युगमात्रं च क्षेत्रतः ।
कालतो यावद्रीयेत, उपयुक्तश्च भावतः ॥७॥

इन्दियत्थे विवज्जित्ता, सज्झायं चेव पञ्चहा ।
तम्मुत्ती तप्पुरक्कारे, उवउत्ते रियं रिए ॥८॥

१ अंतर्भूत थयेलु.

इन्द्रियार्थान्विवर्ज्य, स्वाध्यायं चैव पंचधा ।
तन्मूर्त्तिः (सन् ) तत्पुरस्कारः, उपयुक्त इर्या रीयेत ॥८॥

कोहे माणे य मायाए, लोभे य उवउत्तया ।
हासे भए मोहरिए, विकहासु तहेव य ॥९॥

क्रोधे माने च मायायां, लोभे चोपयुक्तता ।
हास्ये भये मौखर्ये, विकथासु तथैव च ॥९॥

एयाइं अट्ठ ठाणाइं, परिवज्जित्तु संजए ।
असावज्जं मियं काले, भासं भासिज्ज पन्नवं ॥१०॥

एतान्यष्टौ स्थानानि, परिवर्ज्य संयतः ।
असावद्यां मितां काले, भाषांभाषेत प्रज्ञावान् ॥१०॥

गवेसणाए गहणे य परिभोगेसणाय जा ।
आहारोवहिसेज्जाए, एए तिन्नि विसोहए ॥११॥

गवेषणायां ग्रहणे च, परिभोगैषणा च या ।
आहारोपधिशय्यासु, एतास्तिस्रोऽपि शोधयेत् ॥११॥

उग्गमुप्पायणं पढमे, बीए सोहेज्ज एसणं ।
परिभोयम्मि चउक्कं, विसोहेज्ज जयं जई ॥१२॥

उद्गमनोत्पादनदोषान् प्रथमायां,द्वितीयायां शोधयेदेषणादोषान्
परिभोगैषणायां [1]चतुष्कं, विशोधयेद्यतमानो यतिः ॥१२॥

ओहोवहोवग्गहियं, भण्डगं दुविहं मुणी ।
गिण्हन्तो निक्खिवन्तो वा, पउंजेज्ज इमं विहिं ॥१३॥

ओघोपधिमौपग्रहिकोपधिं, भाण्डकं द्विविधं मुनिः ।
गृहणन्निक्षिपॅश्च, प्रयुञ्जीतेमं विधिम् ॥१३॥

चक्खुसा पडिलेहित्ता, पमज्जेज्ज जयं जई ।
आइए निक्खिवेज्जा वा, दुहओ वि समिए सया ॥१४॥

१ सयोजनादि मांडलीयाना चार दोष.

चक्षुषा प्रतिलेख्य, प्रमार्जयेत् यतो यतिः ।
आददीत निक्षिपेद्वा, द्विधाऽपि समितः सदा ॥१४॥

उच्चारं पासवणं, खेलं सिंघाणजल्लियं ।
आहारं उवहिं देहं, अन्नं वावि तहाविहं ॥१५॥
उच्चारं प्रस्रवणं, खेलं सिंघाणं जल्लकम् ।
आहारमुपधिं देहं, अन्यद्वापि तथाविधम् ॥१५॥

अणावायमसंलोए, अणावाए चेव होइ संलोए ।
आवायमसंलोए, आवाए चेव संलोए ॥१६॥
[1]अनापातमसंलोकं, अनापातं चैव भवति संलोकम् ।
आपातमसंलोकं, आपातं चैव संलोकम् ॥१६॥

अणावायमसंलोए, परस्सणुवघाइए ।
समे अज्झुसिरे यावि, अचिरकालकयम्मि य ॥१७॥
अनापातेऽसंलोके, परस्यानुपघातके ।
समेऽशुषिरे चापि, अचिरकालकृते च ॥१७॥

विच्छिण्णे दूरमोगाढे, नासन्ने बिलवज्जिए ।
तसपाणबीयरहिए, उच्चाराईणि वोसिरे ॥१८॥
विस्तीर्णे दूरमवगाढे, नासन्ने बिलवर्जिते ।
त्रसप्राणबीजरहिते, उच्चारादीनि व्युत्सृजेत् ॥१८॥

एयाओ पञ्च समिईओ, समासेण वियाहिया ।
एत्तो य तओ गुत्तीओ, वोच्छामि अणुपुव्वसो ॥१९॥
एताः पञ्चसमितयः समासेन व्याख्याताः ।
इतश्च तिस्रो गुप्तीः, प्रवक्ष्याम्यानुपूर्व्या ॥१९॥

1 आ बधां (दश) स्थंडिलनां विशेषणो छे.

सच्चा तहेव मोसा य, सच्चमोसा तहेव य।
चउत्थी असच्चमोसा य, मणगुत्तिओ चउव्विहा ॥२०॥
सत्या तथैव मृषा च, सत्यामृषा तथैव च।
चतुर्थ्यसत्यामृषा च, मनोगुप्तिश्चतुर्विधा ॥२०॥

संरम्भसमारम्भे, आरम्भे य तहेव य।
मणं पवत्तमाणं तु, नियत्तेज्ज जयं जई ॥२१॥
[1]संरंभे [2]समारंभे, [3]आरंभे च तथैव च।
मनः प्रवर्तमानं तु, निवर्त्तयेद्यतं यतिः ॥२१॥

सच्चा तहेव मोसा य, सच्चमोसा तहेव य।
चउत्थी असच्चमोसा य, वइगुत्ती चउव्विहा ॥२२॥
सत्या तथैव मृषा च, सत्यामृषा तथैव च।
चतुर्थ्यसत्यामृषा तु, वचोगुप्तिश्चतुर्विधा ॥२२॥

संरम्भसमारम्भे, आरम्भे य तहेव य।
वयं पवत्तमाणं तु नियत्तेज्ज जयं जई ॥२३॥
संरंभे समारंभे, आरंभे च तथैव च।
वचः प्रवर्तमानं तु, निवर्तयेद्यतं यतिः ॥२३॥

ठाणे निसीयणे चेव, तहेव य तुयट्टणे।
उल्लंघणपल्लंघणे, इन्दियाण य जुंजणे ॥२४॥
स्थाने निषीदने चैव, तथैव च त्वग्वर्तने।
उल्लंघने प्रलंघने, इन्द्रियाणां च योजने ॥२४॥

संरम्भसमारम्भे आरम्भम्मि तहेव य।
कायं पवत्तमाणं तु, नियत्तेज्ज जयं जई ॥२५॥
संरंभे समारंभे, आरंभे तथैव च।
कायं प्रवर्तमानं तु, निवर्तयेद्यतं यतिः ॥२५॥

१ दुष्ट संकल्प. २ दुष्ट चिन्तवन. ३ मारवा माटे दुर्ध्यान.

एयाओ पंच समिईओ, चरणस्स य पवत्तणे।
गुत्ती नियत्तणे वुत्ता, असुभत्थेसु सव्वसो ॥२६॥
एताः पंचसमितयः, चरणस्य च प्रवर्तने।
गुप्तयो निवर्तने उक्ताः, अशुभार्थेभ्यःसर्वेभ्यः ॥२६॥
एआओ पवयणमाया, जे सम्मं आयरे मुणी।
सो खिप्पं सव्वसंसारा, विप्पमुच्चइ पण्डिए ॥२७॥
एताः प्रवचनमातृः, यः सम्यगाचरेन्मुनिः।
स क्षिप्रं सर्वसंसारात्, विप्रमुच्यते पण्डितः ॥२७॥
॥ त्ति बेमि ॥ इति समिईओ चउवीसइमं अज्झयणं समत्तं ॥२४॥
इतिब्रवीमि इतिसमितयश्चतुर्विंशमध्ययनं समाप्तं

---

॥ अह जन्नइज्जं पञ्चवीसइमं अज्झयणं ॥
॥ अथ यज्ञीयं पंचविंशतितममध्ययनं ॥

माहणकुलसंभूओ, आसि विप्पो महायसो।
जायाई जमजन्नम्मि, जयघोसि त्ति नामओ ॥१॥
ब्राह्मणकुलसंभूतः, आसीद्विप्रो महायशाः।
यायाजी [1]यमयज्ञे, जयघोष इति नामतः ॥१॥
इन्दियग्गामनिग्गाही, मग्गगामी महामुणी।
गामाणुग्गाम रीयंते, पत्तो वाणारसिं पुरिं ॥२॥
इन्द्रियग्रामनिग्राही, मार्गगामी महामुनिः।
ग्रामानुग्रामं रीयमाणः, प्राप्तो वाराणसी पुरीम् ॥२॥
वाणारसीए बहिया, उज्जाणम्मि मणोरमे।
फासुए सेज्जासंथारे, तत्थ वासमुवागए ॥३॥
वाराणस्यां बहिः, उद्याने मनोरमे।
प्रासुके शय्यासंस्तारे, तत्रवासमुपागतः ॥३॥

---

१ पंचमहाव्रतरूप यज्ञने विषे.

अह तेणेव कालेणं, पुरीए तत्थ माहणे ।
विजयघोसि त्ति नामेण, जन्नं जयइ वेयवी ॥४॥
अथ तस्मिन्नेव काले, पुर्यां तत्र ब्राह्मणः ।
विजयघोष इति नाम्ना, यज्ञं यजति वेदवित् ॥४॥

अह से तत्थ अणगारे, मासक्खमणपारणे ।
विजयघोसस्स जन्नम्मि, भिक्खमट्ठा उवट्ठिए ॥५॥
अथ स तत्रानगारः, मासक्षमणपारणायाम् ।
विजयघोषस्य यज्ञे, भिक्षार्थमुपस्थितः ॥५॥

समुवट्ठियं तहिं सन्तं, जायगो पडिसेहए ।
न हु दाहामि ते भिक्खं, भिक्खू जायाहि अन्नओ ॥६॥
समुपस्थितं तत्र सन्तं, याजकः प्रतिषेधयति ।
न खलु दास्यामि तुभ्यं भिक्षां, भिक्षो याचस्वान्यतः ॥६॥

जे य वेयविऊ विप्पा, जन्नट्ठा य जे दिया ।
जोइसंगविऊ जे य, जे य धम्माण पारगा ॥७॥
ये च वेदविदो विप्राः, [1]यज्ञार्थाश्च ये द्विजाः ।
ज्योतिःशास्त्रांगविदो ये च, ये च धर्माणाम् पारगाः ॥७॥

जे समत्था समुद्धत्तुं, परमप्पाणमेव य ।
तेसिं अन्नमिणं देयं, भो भिक्खू सव्वकामियं ॥८॥
ये समर्थाः समुद्धर्तुं, परमात्मानमेवच ।
तेभ्योऽन्नमिदं देयं, भो भिक्षो ? सर्वकाम्यम् ॥८॥

सो तत्थ एवं पडिसिद्धो, जायगेण महामुणी ।
न वि रुट्ठो न वि तुट्ठो, उत्तमट्ठगवेसओ ॥९॥
स तत्रैवं प्रतिषिद्धः, याजकेन महामुनिः ।
नापि रुष्टो नापि तुष्टः, उत्तमार्थगवेषकः ॥९॥

१ यज्ञा प्रयोजनवाळा.

नअट्ठं पाणहेउं वा, नवि निव्वाहणाय वा ।
तेसिं विमोक्खणट्ठाए, इमं वयणमब्बवी ॥१०॥
नान्नार्थं पानहेतुं वा, नापि [1]निर्वाहणाय वा ।
तेषां विमोक्षणार्थं, इदं वचनमब्रवीत् ॥१०॥
नवि जाणासि वेयमुहं, नवि जन्नाण जं मुहं ।
नक्खत्ताण मुहं जं च, जं च धम्माण वा मुहं ॥११॥
नापि जानासि वेदमुखं, नापि यज्ञानां यन्मुखम् ।
नक्षत्राणां मुखं यच्च, यच्चधर्माणां वा मुखम् ॥११॥
जे समत्था समुद्धत्तुं, परमप्पाणमेव य ।
न ते तुमं वियाणासि, अह जाणासि तो भण ॥१२॥
ये समर्थाः समुद्धर्तुं, परमात्मानमेव च ।
न तान्त्वं विजानासि, अथ जानासि तदा भण ॥१२॥
तस्सक्खेवपमोक्खं तु, अचयन्तो तहिं दिओ ।
सपरिसो पंजली होउं, पुच्छई तं महामुणिं ॥१३॥
तस्याक्षेपप्रमोक्षं तु, (दातुं) अशक्नुवन्तत्र द्विजः ।
सपरिषत् प्राञ्जलिर्भूत्वा, पृच्छति तं महामुनिम् ॥१३॥
वेयाणं च मुहं बूहि, बूहि जन्नाण जं मुहं ।
नक्खत्ताण मुहं बूहि, बूहि धम्माण वा मुहं ॥१४॥
वेदानां च मुखं ब्रूहि, ब्रूहि यज्ञानां यन्मुखम् ।
नक्षत्राणां मुखं ब्रूहि, ब्रूहि धर्माणां वा मुखं ॥१४॥
जे समत्था समुद्धत्तुं, परमप्पाणमेव य ।
एयं मे संसयं सव्वं, साहू कहसु पुच्छिओ ॥१५॥
ये समर्थाः समुद्धर्तुं, परमात्मानमेव च ।
एतं मे संशयं सर्वं, साधो कथय (मया) पृष्टः ॥१५॥

१ वस्त्रादि माटे.

अग्गिहुत्तमुहा वेया, जन्नट्ठी वेयसा मुहं ।
नक्खत्ताण मुहं चन्दो, धम्माण कासवो मुहं ॥१६॥
अग्निहोत्रमुखा वेदाः, यज्ञार्थी वेदसां मुखम् ।
नक्षत्राणां मुखं चन्द्रः, धर्माणां काश्यपो मुखम् ॥१६॥

जहा चन्दं गहाईया, चिट्ठन्ती पंजलीउडा ।
वन्दमाणा नमंसन्ता, उत्तमं मणहारिणो ॥१७॥
यथा चंद्रं ग्रहादिकाः, तिष्ठन्ति प्राञ्जलिपुटाः ।
वन्दमाना नमस्यन्तं, उत्तमं मनोहारिणः ॥१७॥

अजाणगा जन्नवाई, विज्जामाहणसंपया ।
मूढा सज्झायतवसा, भासच्छन्ना इवग्गिणो ॥१८॥
अजानाना यज्ञवादिनः, विद्याब्राह्मणसंपदाम् ।
मूढाः स्वाध्यायतपसा, भस्मच्छन्ना इवाग्नयः ॥१८॥

जो लोए बम्भणो वुत्तो अग्गीव महिओ जहा ।
सया कुसलसंदिट्ठं, तं वयं बूम माहणं ॥१९॥
यो लोके ब्राह्मण उक्तः, अग्निरिव महितो यथा ।
सदा कुशलसंदिष्टं, तं वयं ब्रूमो ब्राह्मणम् ॥१९॥

जो न सज्जइ आगन्तु, पव्वयन्तो न सोयइ ।
रमइ अज्जवयणम्मि, तं वयं बूम माहणं ॥२०॥
यो न स्वजत्यागन्तुं, प्रव्रजन्न शोचति ।
रमत आर्यवचने, तं वयं ब्रूमो ब्राह्मणम् ॥२०॥

जायरूवं जहामट्ठं, निद्धन्तमलपावगं ।
रागदोसभयाईयं, तं वयं बूम माहणं ॥२१॥
[1]जातरूपं यथा मृष्टं, निध्मातमलपापकं ।
रागद्वेषभयातीतं, तं वयं ब्रूमो ब्राह्मणं ॥२१॥

१ सोनु.

तवस्सियं किसं दन्तं अवचियमंससोणियं ।
सुव्वयं पत्तनिव्वाणं, तं वयं बूम माहणं ॥२२॥
तपस्विनं कृशं दान्तं, अपचितमांसशोणितम् ।
सुव्रतं प्राप्तनिर्वाणं, त वयं ब्रूमो ब्राह्मणं ॥२२॥
तसपाणे वियाणेत्ता, संगहेण य थावरे।
जो न हिंसइ तिविहेण, तं वयं बूम माहणं ॥२३॥
त्रसप्राणिनो विज्ञाय, संग्रहेण च स्थावरान् ।
यो न हिनस्ति त्रिविधेन, तं वयं ब्रूमो ब्राह्मणं ॥२३॥
कोहावा जइ वा हासा, लोहा वा जइ वा भया ।
मुसं न वयई जो उ, तं वयं बूम माहणं ॥२४॥
क्रोधाद्वा यदि वा हास्यात् , लोभाद्वा यदि वा भयात् ।
मृषा न वदति यस्तु, तं वयं ब्रमो ब्राह्मणं ॥२४॥
चित्तमन्तमचित्तं वा, अप्पं वा जइ वा बहुं ।
न गिण्हाइ अदत्तं जे, तं वय बूम माहणं ॥२५॥
चित्तवन्तमचित्तं वा, अल्पं वा यदि वा बहुम् ।
न गृहणात्यदत्तं यः, तं वयं ब्रमो ब्राह्मणं ॥२५॥
दिव्वमाणुसतेरिच्छं, जो न सेवइ मेहुणं ।
मणसा कायवक्केणं, तं वयं बूम माहणं ॥२६॥
दिव्यमानुष्यतैरश्चं, यो न सेवते मैथुनम् ।
मनसा कायवाक्येन, तं वयं ब्रमो ब्राह्मण ॥२६॥
जहा पोमं जले जायं, नोवलिप्पइ वारिणा ।
एवं अलित्तं कामेहिं, तं वयं बूम माहणं ॥२७॥
यथा पद्मं जले जातं, नोपलिप्यते वारिणा ।
एवमलिप्तं कामैः, तं वयं ब्रूमो ब्राह्मणम् ॥२७॥
अलोलुयं मुहाजीवि, अणगारं अकिंचणं ।
असंसत्तं गिहत्थेसु, तं वयं बूम माहणं ॥२८॥

अलोलुपं मुधाजीवितं, अनगारमकिंचनम् ।
असंसक्तं गृहस्थेषु, तं वयं ब्रूमो ब्राह्मणं ॥२८॥

जहित्ता पुव्वसंजोगं, नाइसंगे य बन्धवे ।
जो न सज्जइ भोगेसु, तं वयं बूम माहणं ॥२९॥

हित्वा पूर्वसंयोगं, ज्ञातिसंगाँश्च बान्धवान् ।
यो न सजति भोगेषु, तं वयं ब्रूमो ब्राह्मणं ॥२९॥

पसुबन्धा सव्ववेया जट्ठं च पावकम्मुणा ।
न तं तायन्ति दुस्सीलं, कम्माणि बलवन्ति हि ॥३०॥

[1]पशुबन्धा सर्ववेदाः, इष्टं च पापकर्मणा ।
न [2]तं त्रायन्ते दुःशीलं, कर्माणि बलवन्ति हि ॥३०॥

न वि मुण्डिएण समणो, न ओंकारेण बम्भणो ।
न मुणी रण्णवासेणं, कुसचीरेण न तावसो ॥३१॥

नाऽपि मुण्डितेन श्रमणः, न ओंकारेण ब्राह्मणः ।
न मुनिररण्यवासेन, कुशचीरेण न तापसः ॥३१॥

समयाए समणो होइ, बम्भचेरेण बम्भणो ।
नाणेण य मुणी होइ, तवेण होइ तावसो ॥३२॥

समतया श्रमणो भवति, ब्रह्मचर्येण ब्राह्मणः ।
ज्ञानेन च मुनिर्भवति, तपसा भवति तापसः ॥३२॥

कम्मुणा बम्भणो होइ, कम्मुणा होइ खत्तिओ ।
वइसो कम्मुणा होइ, सुद्दो हवइ कम्मुणा ॥३३॥

कर्मणा ब्राह्मणो भवति, कर्मणा भवति क्षत्रियः ।
वैश्यो कर्मणा भवति, शूद्रो भवति कर्मणा ॥३३॥

एए पाउकरे बुद्धे, जेहिं होइ सिणायओ ।
सव्वकम्मविणिम्मुक्कं, तं वयं बूम माहणं ॥३४॥

---

१ पशुवध निरूपनारा. २ यज्ञ करनारते.

एतान्प्रादुरकार्षीद् बुद्धः, यैर्भवति स्नातकः ।
सर्वकर्मविनिर्मुक्तं, तं वयं ब्रूमो ब्राह्मणम् ॥३४॥

एवं गुणसमाउत्ता, जे भवन्ति दिउत्तमा ।
ते समत्था समुद्धत्तुं, परमप्पाणमेव य ॥३५॥
एवं गुणसमायुक्ताः, ये भवन्ति द्विजोत्तमाः ।
ते समर्थाः समुद्धर्तुं, परमात्मानमेव च ॥३५॥

एवं तु संसए छिन्ने, विजयघोसे य माहणे ।
समुदाय तयं तं तु, जयघोसं महामुणिं ॥३६॥
एवं तु संशये छिन्ने, विजयघोषश्च ब्राह्मणः ।
समादाय ततस्तं तु, जयघोषं महामुनिम् ॥३६॥

तुट्ठे य विजयघोसे, इणमुदाहु कयंजली ।
माहणत्तं जहाभूयं, सुट्ठु मे उवदंसियं ॥३७॥
तुष्टश्च विजयघोषः, इदमुदाह कृताञ्जलिः ।
ब्राह्मणत्वं यथाभूतं, सुष्ठु मे उपदर्शितम् ॥३७॥

तुब्भेजइया जन्नाणं, तुब्भे वेयविऊ विऊ ।
जोइसंगविऊ तुब्भे, तुब्भे धम्माण पारगा ॥३८॥
यूयं यष्टारो यज्ञाना, यूयं वेदविदो विदः ।
ज्योतिषांगविदो यूयं, यूयं धर्माणां पारगाः ॥३८॥

तुब्भे समत्था समुद्धत्तुं, परमप्पाणमेव य ।
तमणुग्गहं करेहम्हं, भिक्खेणं भिक्खु उत्तमा ॥३९॥
यूयं समर्थाः समुद्धर्तुं, परमात्मानमेव च ।
तदनुग्रहं कुरुतास्माकं भैक्ष्येण भिक्षूत्तमाः ॥३९॥

न कज्जं मज्झ भिक्खेण, खिप्पं निक्खमसू दिया ।
मा भमिहिसि भयावट्टे, घोरे संसारसागरे ॥४०॥

न कार्यं मम भैक्ष्येण, क्षिप्रं निःकाम द्विज ?
मा भ्रम भयावर्ते, घोरे संसारसागरे ॥४०॥

उवलेवो होइ भोगेसु, अभोगी नोवलिप्पई ।
भोगी भमइ संसारे, अभोगी विप्पमुच्चई ॥४१॥
[1]उपलेपो भवति भोगेषु, अभोगी नोपलिप्यते ।
भोगी भ्राम्यति संसारे, अभोगी विप्रमुच्यते ॥४१॥

उल्लो सुक्खो य दो छूढा, गोलया मट्टियामया ।
दो वि आवडिया कुड्डे, जो उल्लो सोऽत्थ लग्गई ॥४२॥
आर्द्रः शुष्कश्च द्वौ क्षिप्तौ, गोलकौ मृत्तिकामयौ ।
द्वावप्यापतितौ कुड्ये, य आर्द्रः स तत्र लगति ॥४२॥

एवं लग्गन्ति दुम्मेहा, जे नरा कामलालसा ।
विरत्ता उ न लग्गन्ति, जहा सुक्के उ गोलए ॥४३॥
एवं लगन्ति दुर्मेधसः, ये नराः कामलालसाः ।
विरक्तास्तु न लगन्ति, यथा शुष्कस्तु गोलकः ॥४३॥

एवं से विजयघोसे, जयघोसस्स अन्तिए ।
अणगारस्स निक्खन्तो, धम्मं सोच्चा अणुत्तरं ॥४४॥
एवं स विजयघोषः, जयघोषस्यान्तिके ।
अनगारस्य निष्क्रान्तः, धर्मं श्रुत्वाऽनुत्तरम् ॥४४॥

खवित्ता पुव्वकम्माइं, संजमेण तवेण य ।
जयघोसविजयघोसा, सिद्धिं पत्ता अणुत्तरं ॥४५॥
क्षपयित्वा पूर्वकर्माणि, संयमेन तपसा च ।
जयघोषविजयघोषौ, सिद्धिं प्राप्तावनुत्तराम् ॥४५॥

॥ त्ति बेमि ॥ इति जन्नइज्जं पञ्चवीसइमं अज्झयणं समत्तं ॥२५॥
इति ब्रवीमि इति यज्ञीयं पंचविंशतितममध्ययनं समाप्तं

---

1 कर्मबंधन.

## ॥ अह सामायारी छव्वीसइमं अज्झयणं ॥

### ॥ अथ समाचारी षड्विंशतितममध्ययनं ॥

सामायारिं पवक्खामि, सव्वदुक्खविमोक्खणिं ।
जं चरित्ताण निग्गन्था, तिण्णा संसारसागरं ॥१॥

समाचारीं प्रवक्ष्यामि, सर्वदुःखविमोक्षणीम् ।
यां चरित्वा निर्ग्रन्थाः, तीर्णाः संसारसागरम् ॥१॥

पढमा आवस्सिया नाम, बिइया य निसीहिया ।
आपुच्छणा य तइया, चउत्थी पडिपुच्छणा ॥२॥

प्रथमाऽऽवश्यकी नाम्नी, द्वितीया च नैषेधिकी ।
आप्रच्छना च तृतीया, चतुर्थी प्रतिप्रच्छना ॥२॥

पंचमी छन्दणा नाम, इच्छाकारो य छट्ठओ ।
सत्तमो मिच्छाकारो उ, तहक्कारो य अट्ठमो ॥३॥

पंचमी छन्दना नाम्नी, इच्छाकारश्चषष्ठी ।
सप्तमी मिथ्याकारस्तु, तथाकारश्चाष्टमी ॥३॥

अब्भुट्ठाणं च नवमं, दसमी उवसंपदा ।
एसा दसंगा साहूणं, सामायारी पवेइया ॥४॥

अभ्युत्थानं च नवमी, दशमी उपसंपद् ।
एषा दशांगा साधूना, समाचारी प्रवेदिता ॥४॥

गमणे आवस्सियं कुज्जा, ठाणे कुज्जा निसीहियं ।
आपुच्छणं सयंकरणे, परकरणे पडिपुच्छणं ॥५॥

गमन आवश्यकी कुर्यात्, स्थाने कुर्यान्नैषेधिकीम् ।
आप्रच्छना स्वयंकरणे, परकरणे प्रतिप्रच्छना ॥५॥

छन्दणा दव्वजाएणं, इच्छाकारो य सारणे ।
मिच्छाकारो य निन्दाए, तहक्कारो पडिस्सुए ॥६॥

छंदना द्रव्यजातेन, इच्छाकारश्च सारणे ।
मिथ्याकारश्च निन्दायां, तथाकारः प्रतिश्रुते ॥६॥

अब्भुट्ठाणं गुरुपूया, अच्छणे उवसंपदा ।
एवं दुपंचसंजुत्ता, सामायारी पवेइया ॥७॥

अभ्युत्थानं गुरुपूजायां, अवस्थाने उपसंपद् ।
एवं द्विपंचसंयुक्ता, समाचारी प्रवेदिता ॥७॥

पुव्विल्लम्मि चउब्भाए, आइच्चम्मि समुट्ठिए ।
भण्डयं पडिलेहित्ता, वन्दित्ता य तओ गुरुं ॥८॥

पूर्वस्मिन् चतुर्भागे, आदित्ये समुत्थिते ।
भाण्डकं प्रतिलेख्य, वन्दित्वा च ततो गुरुम् ॥८॥

पुच्छिज्ज पंजलिउडो, किं कायव्वं मए इह ।
इच्छं निओइउं भन्ते, वेयावच्चे व सज्झाए ॥९॥

पृच्छेत्प्राञ्जलिपुटः, किं कर्तव्यं मयेह ।
इच्छामि नियोजयितुं भदन्त !, वैयावृत्ये वा स्वाध्याये ॥९॥

वेयावच्चे निउत्तेण, कायव्वं अगिलायओ ।
सज्झाए वा निउत्तेण, सव्वदुक्खविमोक्खणे ॥१०॥

वैयावृत्ये नियुक्तेन, कर्तव्यमग्लान्या ।
स्वाध्याये वा नियुक्तेन, सर्वदुःखविमोक्षणे ॥१०॥

दिवसस्स चउरो भागे, भिक्खू कुज्जा वियक्खणो ।
तओ उत्तरगुणे कुज्जा, दिणभागेसु चउसु वि ॥११॥

दिवसस्य चतुरो भागान्, कुर्याद् भिक्षुर्विचक्षणः ।
तत उत्तरगुणान्कुर्यात्, दिनभागेषु चतुर्ष्वपि ॥११॥

पढमं पोरिसि सज्झायं, बीयं झाणं झियायई ।
तइयाए भिक्खायरियं, पुणो चउत्थीइ सज्झायं ॥१२॥

प्रथमायां पौरुष्यां स्वाध्यायं, द्वितीयायां ध्यानं ध्यायेत् ।
तृतीयायां भिक्षाचर्या, पुनश्चतुर्थ्यां स्वाध्यायम् ॥१२॥

आसाढे मासे दुपया, पोसे मासे चउप्पया ।
चित्तासोएसु मासेसु, तिप्पया हवइ पोरिसी ॥१३॥
आषाढे मासे द्विपदा, पौषे मासे चतुष्पदा ।
चैत्राश्विनयोर्मासयोः, त्रिपदा भवति पौरुषी ॥१३॥

अंगुलं सत्तरत्तेणं, पक्खेणं च दुरंगुलं ।
वड्ढए हायए वावि, मासेणं चउरंगुलं ॥१४॥
अङ्गुलं सप्तरात्रेण, पक्षेण च द्व्यंगुलम् ।
वर्धते हीयते वापि, मासेन चतुरंगुलम् ॥१४॥

आसाढवहुले पक्खे, भद्दवए कत्तिए य पोसे य ।
फग्गुणवइसाहेसु य, बोद्धव्वा ओमरत्ताओ ॥१५॥
आषाढे [1]पक्षबहुले, भाद्रपदे कार्तिके च पौषे च ।
फाल्गुने वैशाखे च, बोद्धव्या अवमरात्रयः ॥१५॥

जेट्ठामुले आसाढसावणे, छहि अंगुलेहिं पडिलेहा ।
अट्ठहिं बीयतयम्मि, तइए दस अट्ठहिं चउत्थे ॥१६॥
ज्येष्ठामूले आषाढे श्रावणे, षड्भिरंगुलैः [2]प्रतिलेखा ।
अष्टाभिर्द्वितीयत्रिके, तृतीये दशभिरष्टभिश्चतुर्थे ॥१६॥

रतिं पि चउरो भागे, भिक्खू कुज्जा वियक्खणो ।
तओ उत्तरगुणे कुज्जा, राइभाएसु चउसु वि ॥१७॥
रात्रावपि चतुरो भागान्, भिक्षुः कुर्याद् विचक्षणः ।
तत उत्तरगुणान्कुर्यात्, रात्रिभागेषु चतर्ष्वपि ॥१७॥

पढमं पोरिसिं सज्झायं, वीयं झाणं झियायई ।
तइयाए निद्दमोक्खं तु, चउत्थी भुज्जो वि सज्झायं ॥१८॥

१ कृष्णपक्षमां. २ पडिलेहणनो काळ.

प्रथमपौरुष्यां स्वाध्यायं, द्वितीयायां ध्यानं ध्यायेत् ।
तृतीयायां निद्रामोक्षं तु, चतुर्थ्यां भूयोऽपि स्वाध्यायम् ॥१८॥

जे नेइ जया रत्तिं, नक्खत्तं तम्मि नहचउब्भाए ।
संपत्ते विरमेज्जा, सज्झायं पओसकालम्मि ॥१९॥
यन्नयति यदा रात्रि, नक्षत्रं तस्मिन्नेव नभश्चतुर्भागे ।
संप्राप्ते विरमेत् , स्वाध्यायात्प्रदोषकाले ॥१९॥

तम्मेव य नक्खत्ते, गयणचउब्भागसावसेसम्मि ।
वेरत्तियंपि कालं, पडिलेहित्ता मुणी कुज्जा ॥२०॥
तस्मिन्नेव च नक्षत्रे, गगनचतुर्भागसावशेषे ।
वैरात्रिकमपि कालं, प्रतिलेख्य मुनिःकुर्यात् ॥२०॥

पुव्विल्लम्मि चउब्भाए, पडिलेहित्ताण भण्डयं ।
गुरुं वन्दित्तु सज्झायं, कुज्जा दुक्खविमोक्खणं ॥२१॥
पूर्वस्मिन् चतुर्भागे, प्रतिलेख्य भाण्डकम् ।
गुरुं वन्दित्वा स्वाध्यायं, कुर्याद्दुःखविमोक्षणम् ॥२१॥

पोरिसीए चउब्भाए, वन्दित्ताण तओ गुरुं ।
अपडिक्कमित्ता कालस्स, भायणं पडिलेहए ॥२२॥
पौरुष्याश्चतुर्भागे, वन्दित्वा ततो गुरुम् ।
अप्रतिक्रम्य कालं, भाजनं प्रतिलेखयेत् ॥२२॥

मुहपोत्तिं पडिलेहित्ता, पडिलेहिज्ज गोच्छगं ।
गोच्छगलइयंगुलिओ, वत्थाइं पडिलेहए ॥२३॥
मुखपत्रिकां प्रतिलेख्य, प्रतिलेखयेद् गोच्छकम् ।
[1]अङ्गुलिलातगोच्छकः, वस्त्राणि प्रतिलेखयेत् ॥२३॥

उड्ढं थिरं अतुरियं, पुव्वं ता वत्थमेव पडिलेहे ।
तो बिइयं पप्फोडे, तइयं च पुणो पमज्जिज्ज ॥२४॥

१ आगलीथी ग्रहण कर्यो छे गुच्छो जेणे एवो मुनिः

उर्ध्व स्थिरमत्वरितं, पूर्वं तावद् वस्त्रमेव प्रतिलेखयेत् ।
ततो द्वितीयं प्रस्फोटयेत, तृतीयं च पुनः प्रमृज्यात् ॥२४॥

अणच्चावियं अवलियं, अणाणुवंधिममोसलिं चेव ।
छप्पुरिमा नव खोडा, पाणीपाणिविसोहणं ॥२५॥
अनर्तितमवलितं, अननुवंध्यमौशली चैव ।
षट्पूर्वा [1]नवखोटकाः(कर्तव्याः), पाणिप्राणिविशोधनं ॥२५॥

आरभडा सम्मद्दा, वज्जेयव्वा य मोसली तइया ।
पप्फोडणा चउत्थी, विक्खित्ता वेइया छट्ठी ॥२६॥
आरभटा संमर्दा, वर्जयितव्या च मौशली तृतीया ।
प्रस्फोटना चतुर्थी, विक्षिप्ता वेदिका षष्ठी ॥२६॥

पसिढिलपलम्बलोला, एगामोसा अणेगरूवधुणा ।
कुणइ पमाणे पमायं, संकियगणणोवगं कुज्जा ॥२७॥
प्रशिथिलं प्रलंबो लोलः, एकामर्षाऽनेकरूपधूना ।
कुरुते प्रमाणे प्रमादं, शंकिते गणनोपयोगं कुर्यात् ॥२७॥

अणूणाइरित्तपडिलेहा, अविवच्चासा तहेव य ।
पढमं पयं पसत्थं, सेसाणि उ अप्पसत्थाइं ॥२८॥
अनूनाऽतिरिक्ता प्रतिलेखना, अविव्यत्यासा तथैव च ।
प्रथमं पदं प्रशस्तं, शेषाणि त्वप्रशस्तानि ॥२८॥

पडिलेहणं कुणन्तो, मिहो कहं कुणइ जणवयकहं वा ।
देइ व पच्चक्खाणं, वाएइ सयं पडिच्छइ वा ॥२९॥
प्रतिलेखनां कुर्वन् , मिथः कथां करोति जनपदकथां वा ।
ददाति वा प्रत्याख्यान, वाचयति स्वयं प्रतीच्छति वा ॥२९॥

पुढवी-आउक्काए, तेऊ-वाऊ-वणस्सइ-तसाणं ।
पडिलेहणापमत्तो, छण्हं पि विराहओ होइ ॥३०॥

१ नववार खंखेरवुं.

पृथ्व्यप्काय, तेजोवायुवनस्पतित्रसाणाम् ।
प्रतिलेखनाप्रमत्तः, षण्णामपि विराधको भवति ॥३०॥

पुढवी-आउक्काए, तेऊ-वाऊ-वणस्सइ-तसाणं ।
पडिलेहणाआउत्तो, छण्हं संरक्खओ होइ ॥३१॥

पृथ्व्यप् , तेजो वायुवनस्पतित्रसाणाम् ।
प्रतिलेखनाऽऽयुक्तः, षण्णां संरक्षको भवति ॥३१॥

तइयाए पोरिसीए, भत्तं पाणं गवेसए ।
छण्हं अन्नतराए, कारणम्मि समुट्ठिए ॥३२॥

तृतीयायां पौरुष्यां, भक्तं पानं गवेषयेत् ।
षण्णामन्यतरस्मिन् , कारणे समुत्थिते ॥३२॥

वेयण वेयावच्चे, इरियट्ठाए य संजमट्ठाए ।
तह पाणवत्तियाए, छट्ठं पुण धम्मचिन्ताए ॥३३॥

वेदनायै वैयावृत्याय, इर्यार्थाय च संयमार्थाय ।
तथाप्राणप्रत्ययाय, षष्ठं पुनर्धर्मचिन्तायै ॥३३॥

निग्गन्थो धिइमन्तो, निग्गन्थी वि न करेज्ज छहिं चेव ।
ठाणेहिं उ इमेहिं, अणइक्कमणाइ से होइ ॥३४॥

निर्ग्रन्थो धृतिमान् , निर्ग्रन्थ्यपि न कुर्याद् षड्भिश्चैव ।
स्थानैस्त्वेभिः, अनतिक्रमणाय तस्य भवति (तानि) ॥३४॥

आयंके उवसग्गे, तितिक्खया बम्भचेरगुत्तीसु ।
पाणिदया तवहेउं, सरीरवोच्छेयणट्ठाए ॥३५॥

आतंक उपसर्गे, तितक्षया ब्रह्मचर्यगुप्तिषु ।
प्राणिदयाहेतोः तपोहेतोः, शरीरव्यवच्छेदार्थाय ॥३५॥

अवसेसं भण्डगं गिज्झ, चक्खुसा पडिलेहए ।
परमद्धजोयणाओ, विहारं विहरए मुणी ॥३६॥

अवशेषं भाण्डकं गृहीत्वा, चक्षुषा प्रतिलेखयेत् ।
*परमम‌र्धयोजनात् , विहारं विहरेन्मुनिः ॥३६॥

चउत्थीए पोरिसीए, निक्खिवित्ताण भायणं ।
सज्झायं च तओ कुज्जा, सव्वभावविभावणं ॥३७॥
चतुर्थ्यां पौरुष्यां, निक्षिप्य भाजनम् ।
स्वाध्यायं च ततः कुर्यात् , सर्वभावविभावनम् ॥३७॥

पोरिसीए चउब्भाए, वन्दित्ताण तओ गुरुं ।
पडिक्कमित्ता कालस्स, सेज्जं तु पडिलेहए ॥३८॥
पौरुष्याश्चतुर्भागे, वन्दित्वा ततो गुरुम् ।
प्रतिक्रम्य कालं, शय्यां तु प्रतिलेखयेत् ॥३८॥

पासवणुच्चारभूमिं च, पडिलेहिज्ज जयं जई ।
काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं ॥३९॥
प्रस्रवणोच्चारभूमिं च, प्रतिलेखयेद् यतं यतिः ।
कायोत्सर्गं ततः कुर्यात् , सर्वदुःखविमोक्षणम् ॥३९॥

देवसियं च अईयारं, चिन्तिज्जा अणुपुव्वसो ।
नाणे अ दंसणे चेव, चरित्तम्मि तहेव य ॥४०॥
दैवसिकं चातिचारं, चिन्तयेदनुपूर्वशः ।
ज्ञाने च दर्शने चैव, चारित्रे तथैव च ॥४०॥

पारियकाउस्सग्गो, वन्दित्ताण तओ गुरुं ।
देवसियं तु अईयारं, आलोएज्ज जहक्कमं ॥४१॥
पारितकायोत्सर्गः, वन्दित्वा ततो गुरुम् ।
दैवसिकं त्वतिचारं, आलोकयेद्यथाक्रमम् ॥४१॥
पडिक्कमित्तु निस्सल्लो, वन्दित्ताण तओ गुरुं ।
काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं ॥४२॥

* बे गाउ उपरांत आहार न लइ जइने.

प्रतिक्रम्य निःशल्यः, वन्दित्वा ततो गुरुम् ।
कायोत्सर्गं ततः कुर्यात्, सर्वदुःखविमोक्षणम् ॥४२॥

पारियकाउस्सग्गो, वन्दित्ताण तओ गुरुं ।
थुइमंगलं च काऊण, कालं संपडिलेहए ॥४३॥

पारितकायोत्सर्गः, वन्दित्वा ततो गुरुम् ।
स्तुतिमंगलं च कृत्वा, कालं संप्रतिलेखयेत् ॥४३॥

पढमं पोरिसि सज्झायं, बिइयं झाणं झियायई ।
तइयाए निद्दमोक्खं तु, सज्झायं तु चउत्थिए ॥४४॥

प्रथमपौरुष्यां स्वाध्यायं, द्वितीयायां ध्यानं ध्यायेत् ।
तृतीयायां निद्रामोक्षं तु, स्वाध्यायम् तु चतुर्थ्यां ॥४४॥

पोरिसीए चउत्थीए, कालं तु पडिलेहिया ।
सज्झायं तु तओ कुज्जा, अबोहेन्तो असंजए ॥४५॥

पौरुष्यां चतुर्थ्यां, कालं तु प्रतिलेख्य ।
स्वाध्यायं तु ततः कुर्यात्, अबोधयन्न[1] संयतान् ॥४५॥

पोरिसीए चउब्भाए, वन्दिऊण तओ गुरुं ।
पडिक्कमित्तु कालस्स, कालं तु पडिलेहए ॥४६॥

पौरुष्याश्चतुर्भागे, वन्दित्वा ततो गुरुम् ।
प्रतिक्रम्य कालस्य, कालं तु प्रतिलेखयेत् ॥४६॥

आगए कायवोस्सग्गे, सव्वदुक्खविमोक्खणे ।
काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं ॥४७॥

आगते कायव्युत्सर्गे, सर्वदुःखविमोक्षणे ।
कायोत्सर्गं ततः कुर्यात्, सर्वदुःखविमोक्षणम् ॥४७॥

राइयं च अईयारं, चिन्तिज्ज अणुपुव्वसो ।
नाणंमि दंसणंमि य, चरित्तंमि तवंमि य ॥४८॥

---

१ गृहस्थीओने.

राइयं च अईयारं, चिन्तेज्ज अणुपुव्वसो ।
नाणे दंसणे चेव, चरित्तम्मि तवम्मि य ॥४८॥

रात्रिकं चातिचारं, चिन्तयेदनुपूर्वशः ।
ज्ञाने दर्शने च, चारित्रे तपसि च ॥४८॥

पारियकाउस्सग्गो, वन्दित्ताण तओ गुरुं ।
राइयं तु अईयारं, आलोएज्ज जहक्कमं ॥४९॥

पारितकायोत्सर्गः, वन्दित्वा ततो गुरुम् ।
रात्रिकं त्वतिचारं, आलोचयेद्यथाक्रमम् ॥४९॥

पडिक्कमित्तु निस्सल्लो, वन्दित्ताण तओ गुरुं ।
काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं ॥५०॥

प्रतिक्रम्य निःशल्यः, वन्दित्वा ततो गुरुम् ।
कायोत्सर्गं ततः कुर्यात् , सर्वदुःखविमोक्षणम् ॥५०॥

किं तवं पडिवज्जामि, एवं तत्थ विचिन्तए ।
काउस्सग्गं तु पारित्ता, वन्दई य तओ गुरुं । ॥५१॥

कि तपः प्रतिपद्ये, एवं तत्र विचिन्तयेत् ।
कायोत्सर्गं तु पारयित्वा, वन्देत च ततो गुरुम् ॥५१॥

पारियकाउस्सग्गो, वन्दित्ताण तओ गुरुं ।
तवं संपडिवज्जेत्ता, कुज्जा सिद्धाण संथवं ॥५२॥

पारितकायोत्सर्गः, वन्दित्वा ततो गुरुम् ।
तपः संप्रतिपद्य, कुर्यात् सिद्धानां संस्तवम् ॥५२॥

एसा सामायारी, समासेण वियाहिया ।
जं चरित्ता बहू जीवा, तिण्णा संसारसागरं ॥५३॥

एषा समाचारी, समासेन व्याख्याता ।
यां चरित्वा बहवो जीवाः, तीर्णाः संसारसागरम् ॥५३॥

त्ति बेमि ॥ इति सामायारी छब्बीसइमं अज्झयणं समत्तं ॥२६॥

इतिब्रवीमि ॥इतिसमाचारीषड्विंशतितममध्ययनं समाप्तं॥२६॥

## ॥ अह खलुंकिज्जं सत्तवीसइमं अज्झयणं ॥

### ॥ अथ खलुङ्कीयं सप्तविंशमध्ययनं ॥

थेरे गणहरे गग्गे, मुणी आसि विसारए।
आइण्णे गणिभावम्मि, समाहि पडिसंधए ॥१॥

स्थविरो गणधरो गार्ग्यः, मुनिरासीद् विशारदः।
आकीर्णो गणिभावे, समाधि प्रतिसंधत्ते ॥१॥

वहणे वहमाणस्स, कन्तारं अइवत्तई।
जोगे वहमाणस्स, संसारो अइवत्तई ॥२॥

वाहने वाह्यमानस्य, कान्तारमतिवर्तते।
योगे वाह्यमानस्य, संसारोऽतिवर्तते ॥२॥

खलुंके जो उ जोएइ, विहम्माणो किलिस्सई।
असमाहिं च वेएइ, तोत्तओ से य भज्जई ॥३॥

खलुंकान् यस्तु योजयति, विध्यन् क्लिश्यति।
असमाधिं च वेदयति, तोत्रकस्तस्य च भज्यते ॥३॥

एगं डसइ पुच्छम्मि, एगं विन्धइऽभिक्खणं।
एगो भंजइ समिलं, एगो उप्पहपट्ठिओ ॥४॥

एकं दशति पुच्छे, एकं विध्यत्यभीक्ष्णम्।
एको भनक्ति समिलां, एक उत्पथप्रस्थितः ॥४॥

एगो पडइ पासेणं, निवेसइ निवज्जई।
उक्कुद्दइ उप्फिडइ, सढे बालगवी वए ॥५॥

एकः पतति पार्श्वेण, निविशति [1]निपद्यते।
उत्कूर्दति उत्प्लवते, शठो बालगवीमनुव्रजति ॥५॥

माई मुद्धेण पडइ, कुद्धे गच्छइ पडिप्पहं।
मयलक्खेण चिट्ठई, वेगेण य पहावई ॥६॥

१ सुइ जाय छे.

मायी मूर्ध्ना पतति, क्रुद्धो गच्छति प्रतिपथम् ।
मृतलक्षेण तिष्ठति, वेगेन च प्रधावति ॥६॥

छिन्नाले छिन्दई सेल्लिं, दुद्दन्तो भंजए जुगं ।
सेवि य सुस्सुयाइत्ता, उज्जहित्ता पलायए ॥७॥
छिन्नालः छिनत्ति [1]सिल्लिं, दुर्दान्तो भनक्ति युगम् ।
सोऽपि च सूत्कृत्य, उद्धाय पलायते ॥७॥

खलुंका जारिसा जोज्जा, दुस्सीसा वि हु तारिसा ।
जोइया धम्मजाणम्मि, भज्जन्ती धिइदुब्बला ॥८॥
खलुंका यादृशा योज्याः, दुःशिष्या अपि खलु तादृशाः ।
योजिता धर्मयाने, भज्यन्ते धृतिदुर्बलाः ॥८॥

इड्ढीगारविए एगे, एगेऽत्थ रसगारवे ।
सायागारविए एगे, एगे सुचिरकोहणे ॥९॥
ऋद्धिगौरविक एकः, एकोऽत्र रसगौरवः ।
सातागौरविक एकः, एकः सुचिरक्रोधनः ॥९॥

भिक्खालसिए एगे, एगे ओमाणभीरुए ।
थद्धे एगे अणुसासम्मी, हेऊहिं कारणेहि य ॥१०॥
भिक्षालसिक एकः, एकोऽवमानभीरुकः ।
स्तब्ध एकोऽ[2]नुशास्मि, हेतुभिः कारणैश्च ॥१०॥

सो वि अन्तरभासिल्लो, दोसमेव पकुव्वई ।
आयरियाणं तु वयणं, पडिकूलेइऽभिक्खणं ॥११॥
सोऽप्यन्तरभाषावान् , दोषमेव प्रकरोति ।
आचार्याणां तु वचनं, प्रतिकूलयत्यभीक्ष्णम् ॥११॥

न सा ममं वियाणाइ, न वि सा मज्झ दाहिई ।
निग्गया होहिई मन्ने, साहू अन्नोत्थ वज्जउ ॥१२॥

१ बांधवानुं दोरडुं २ आम गुरु चिंतवे छे.

न सा मां विजानाति, नापि सा मह्यं दास्यति ।
निर्गता भविष्यति मन्ये, साधुरन्यस्तत्र व्रजतु ॥१२॥

पेसिया पलिउंचन्ति, ते परियन्ति समन्तओ ।
रायवेट्ठिं च मन्नन्ता, करेन्ति भिउडिं मुहे ॥१३॥

प्रेषिताः परिकुञ्चन्ति (अपलपन्ति), ते परियन्ति समन्तात् ।
राजवेष्टिमिव च मन्यमानाः, कुर्वन्ति भृकुटिं मुखे ॥१३॥

वाइया संगहिया चेव, भत्तपाणेण पोसिया ।
जायपक्खा जहा हंसा, पक्कमन्ति दिसो दिसिं ॥१४॥

वाचिताः संगृहीताश्चैव, भक्तपानेन पोषिताः ।
जातपक्षा यथा हंसाः, प्रक्राम्यन्ति दिशो दश ॥१४॥

अह सारही विचिन्तेइ, खलुंकेहिं समागओ ।
किं मज्झ दुट्ठसीसेहिं, अप्पा मे अवसीयई ॥१५॥

अथ सारथिर्विचिन्तयति, खलुंकैः समागतः ।
कि मम दुष्टशिष्यैः, आत्मा मेऽवसीदति ॥१५॥

जारिसा मम सीसा उ, तारिसा गलिगद्दहा ।
गलिगद्दहे जहित्ताणं, दढं पगिण्हई तवं ॥१६॥

यादृशा मम शिष्यास्तु, तादृशा गलिगर्दभाः ।
गलिगर्दभांस्त्यक्त्वा, दृढं प्रगृहणाति तपः ॥१६॥

मिउमद्दवसंपन्नो, गम्भीरो सुसमाहिओ ।
विहरइ महिं महप्पा, सीलभूएण अप्पणा ॥१७॥

मृदुर्मार्दवसंपन्नः, गंभीरः सुसमाहितः ।
विहरति मही महात्मा, शीलभूतेनात्मना ॥१७॥

॥ त्ति बेमि ॥ खलुंकिज्जं सत्तवीसइमं अज्झयणं समत्तं ॥२७॥
इति ब्रवीमि—इति खलुङ्कीयं सप्तविंशमध्ययनं समाप्तं ॥२७॥

## ॥ अह मोक्खमग्गगई अट्ठावीसइमं अज्झयणं ॥

### ॥ अथ मोक्षमार्गगतिरष्टाविंशममध्ययनं ॥

मोक्खमग्गगई तच्चं, सुणेह जिणभासियं ।
चउकारणसंजुत्तं, नाणदंसणलक्खणं ॥१॥

मोक्षमार्गगति तथ्यां, शृणुत जिनभाषिताम् ।
चतुःकारणसंयुक्तां, ज्ञानदर्शनलक्षणाम् ॥१॥

नाणं च दंसणं चेव, चरित्तं च तवो तहा ।
एस मग्गु त्ति पन्नत्तो, जिणेहि वरदंसिहिं ॥२॥

ज्ञानं च दर्शन चैव, चारित्र च तपस्तथा ।
एष मार्ग इति प्रज्ञप्तः, जिनैर्वरदर्शिभिः ॥२॥

नाणं च दंसणं चेव, चरित्तं च तवो तहा ।
एयंमग्गमणुप्पत्ता, जीवा गच्छन्ति सोग्गइं ॥३॥

ज्ञानं च दर्शनं चैव, चारित्रं च तपस्तथा ।
एतं मार्गमनुप्राप्ताः, जीवा गच्छन्ति सुगति ॥३॥

तत्थ पंचविहं नाणं, सुयं आभिनिवोहियं ।
ओहिनाणं तु तइयं, मणनाणं च केवलं ॥४॥

तत्र पंचविधं ज्ञानं, श्रुतमाभिनिवोधिकम् ।
अवधिज्ञानं तु तृतीय, मनःपर्यायज्ञानं च केवलम् ॥४॥

एयं पंचविहं नाणं, दव्वाण य गुणाण य ।
पज्जवाणं च सव्वेसि, नाणं नाणीहि दंसियं ॥५॥

एतत्पंचविधं ज्ञानं, द्रव्याणा च गुणानां च ।
पर्यवाणां च सर्वेषां, ज्ञानं ज्ञानिभिर्दर्शितम् ॥५॥

गुणाणमासओ दव्वं, एगदव्वस्सिया गुणा ।
लक्खणं पज्जवाणं तु, उभओ अस्सिया भवे ॥६॥

गुणानामाश्रयो द्रव्यं, एकद्रव्याश्रितागुणाः ।
लक्षणं पर्यवाणां तु, उभयोराश्रिताः(स्युः)भवन्ति ॥६॥

धम्मो अहम्मो आगासं, कालो पुग्गल-जन्तवो ।
एस लोगो त्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥७॥
धर्मोऽधर्म आकाशं, कालः पुद्गलजन्तवः ।
एष लोक इति प्रज्ञप्तः, जिनैर्वरदर्शिभिः ॥७॥

धम्मो अहम्मो आगासं, दव्वं इक्किकमाहियं ।
अणन्ताणि य दव्वाणि, कालो पुग्गलजन्तवो ॥८॥
धर्मोऽधर्म आकाशं, द्रव्यमेकैकमाख्यातम् ।
अनन्तानि च द्रव्याणि, कालः पुद्गलजन्तवः ॥८॥

गइलक्खणो उ धम्मो, अहम्मो ठाणलक्खणो ।
भायणं सव्वदव्वाणं, नहं ओगाहलक्खणं ॥९॥
गतिलक्षणस्तु धर्मः, अधर्मः स्थितिलक्षणः ।
भाजनं सर्वद्रव्याणां, नभोऽवगाहलक्षणम् ॥९॥

वत्तणालक्खणो कालो, जीवो उवओगलक्खणो ।
नाणेणं दंसणेणं च, सुहेण य दुहेण य ॥१०॥
वर्तनालक्षणः कालः, जीव उपयोगलक्षणः ।
ज्ञानेन दर्शनेन च, सुखेन च दुःखेन च ॥१०॥

नाणं च दंसणं चेव, चरित्तं च तवो तहा ।
वीरियं उवओगो य, एयं जीवस्स लक्खणं ॥११॥
ज्ञानं च दर्शनं चैव, चारित्रं च तपस्तथा ।
वीर्यमुपयोगश्च, एतज्जीवस्यलक्षणम् ॥११॥

सद्दन्धयार-उज्जोओ, पभा छाया तवो इ वा ।
वण्णरसगन्धफासा, पुग्गलाणं तु लक्खणं ॥१२॥

शब्दोऽन्धकारउद्योतः, प्रभाच्छायातप इति वा ।
वर्णरसगन्धस्पर्शाः, पुद्गलानां तु लक्षणम् ॥१२॥

एगत्तं च पुहत्तं च, संखा संठाणमेव य ।
संजोगा य विभागा य, पज्जवाणं तु लक्खणं ॥१३॥
एकत्वं च पृथक्त्वं च, संख्या संस्थानमेव च ।
संयोगाश्च विभागाश्च, पर्यवाणां तु लक्षणम् ॥१३॥

जीवाजीवा य बन्धो य, पुण्णं पावाऽसवो तहा ।
संवरो निज्जरा मोक्खो, सन्तेए तहिया नव ॥१४॥
जीवा अजीवाश्च बन्धश्च, पुण्यं पापास्रवौ तथा ।
संवरो निर्जरा मोक्षः, सन्त्येते तथ्या नव ॥१४॥

तहियाणं तु भावाणं, सब्भावे उवएसणं ।
भावेणं सद्दहन्तस्स, सम्मत्तं तं वियाहियं ॥१५॥
तथ्यानां तु भावानां, सद्भाव उपदेशनम् ।
भावेन श्रद्दधतः, सम्यक्त्वं तद् व्याख्यातम् ॥१५॥

निसग्गुवएसरुई, आणारुई सुत्त-बीयरुइमेव ।
अभिगम-वित्थाररुई, किरिया-संखेव धम्मरुई ॥१६॥
निसर्गोपदेशरुचिः, आज्ञारुचिः सूत्रबीजरुचिरेव ।
अभिगमविस्ताररुचि., क्रियासंक्षेपधर्मरुचिः ॥१६॥

भूयत्थेणाहिगया, जीवाजीवा य पुण्णपावं च ।
सह सम्मइयासवसंवरो य रोएइ उ निस्सग्गो ॥१७॥
भूतार्थेनाधिगताः, जीवा अजीवाश्च पुण्यं पापं च ।
सहसंमत्याऽऽस्रवसंवरौ च, रोचते (यस्मै) तु निसर्गः ॥१७॥

जो जिणदिट्ठे भावे, चउव्विहे सद्दहाइ सयमेव ।
एमेव नन्नह त्ति य, स निसग्गरुइ त्ति नायव्वो ॥१८॥

यो जिनदृष्टान् भावान् , चतुर्विधान् श्रद्दधाति स्वयमेव ।
एवमेव नान्यथेति च, निसर्गरुचिरिति ज्ञातव्यः ॥१८॥

एए चेव उ भावे, उवइट्ठे जो परेण सद्दहई ।
छउमत्थेण जिणेण व, उवएसरुइ त्ति नायव्वो ॥१९॥
एतान् चैव तु भावान् , उपदिष्टान् यः परेण श्रद्दधाति ।
छद्मस्थेन जिनेन वा, (स)उपदेशरुचिरिति ज्ञातव्यः ॥१९॥

रागो दोसो मोहो, अन्नाणं जस्स अवगयं होइ।
आणाए रोयंतो, सो खलु आणारुई नामं ॥२०॥
रागो द्वेषो मोहः, अज्ञानं यस्यापगतं भवति ।
आज्ञया रोचमानः, स खल्वाज्ञारुचिर्नाम ॥२०॥

जो सुत्तमहिज्जन्तो, सुएण ओगाहई उ सम्मत्तं ।
अंगेण बहिरेण व, सो सुत्तरुइ त्ति नायव्वो ॥२१॥
यः सूत्रमधीयानः, श्रुतेनावगाहते तु सम्यक्त्वम् ।
अंगेन बाह्येन वा, सः सूत्ररुचिरिति ज्ञातव्यः ॥२१॥

एगेण अणेगाइं, पयाइं जो पसरई उ सम्मत्तं ।
उदए व्व तेल्लबिन्दू, सो बीयरुइ त्ति नायव्वो ॥२२॥
एकेनानेकानि, पदानि यः प्रसरति तु सम्यक्त्वम् ।
उदक इव तैलबिन्दुः, स बीजरुचिरिति ज्ञातव्यः ॥२२॥

सो होइ अभिगमरुई, सुयनाणं जेण अत्थओ दिट्ठं ।
एक्कारस अंगाइं, पइण्णगं दिट्ठिवाओ य ॥२३॥
स भवत्यभिगमरुचिः, श्रुतज्ञानं येनार्थतो दृष्टम् ।
एकादशाङ्गानि, प्रकीर्णकानि दृष्टिवादश्च ॥२३॥

दव्वाण सव्वभावा, सव्वपमाणेहिं जस्स उवलद्धा ।
सव्वाहिं नयविहीहिं, वित्थाररुइ त्ति नायव्वो ॥२४॥

द्रव्याणां सर्वभावाः, सर्वप्रमाणैर्यस्योपलब्धाः ।
सर्वैर्नयविधिभिः, विस्ताररुचिरिति ज्ञातव्यः ॥२४॥

दंसणनाणचरित्ते, तवविणए सच्चसमिइगुत्तीसु ।
जो किरियाभावरुई, सो खलु किरियारुई नाम ॥२५॥
दर्शनज्ञानचारित्रे, तपोविनये सत्यसमितिगुप्तिषु ।
यः क्रियाभावरुचिः, स खलुक्रियारुचिर्नाम ॥२५॥

अणभिग्गहियकुदिट्ठी, संखेवरुइ त्ति होइ नायव्वो ।
अविसारओ पवयणे, अणभिग्गहिओ य सेसेसु ॥२६॥
अनभिगृहीतकुदृष्टिः, संक्षेपरुचिरिति भवति ज्ञातव्यः ।
अविशारदः प्रवचने, अनभिगृहीतश्च शेषेषु ॥२६॥

जो अत्थिकायधम्मं, सुयधम्मं खलु चरित्तधम्मं च ।
सद्दहइ जिणाभिहियं, सो धम्मरुइ त्ति नायव्वो ॥२७॥
योऽस्तिकायधर्मं, श्रुतधर्मं खलु चारित्रधर्मं च ।
श्रद्धत्ते जिनाभिहितं, स धर्मरुचिरिति ज्ञातव्यः ॥२७॥

परमत्थसंथवो वा, सुदिट्ठपरमत्थसेवणं वा वि ।
वावन्नकुदंसणवज्जणा, य सम्मत्तसद्दहणा ॥२८॥
[1]परमार्थसंस्तवः, सुदृष्टपरमार्थसेवनं वापि ।
व्यापन्नकुदर्शनवर्जनं च, सम्यक्त्वश्रद्धानं ॥२८॥

नत्थि चरित्तं सम्मत्तविहूणं, दंसणे उ भइयव्वं ।
सम्मत्तचरित्ताइं, जुगवं पुव्वं व सम्मत्तं ॥२९॥
नास्ति चारित्रं सम्यक्त्वविहीनं, दर्शने तु [2]भक्तव्यम् ।
सम्यक्त्वचारित्रे, युगपत्पूर्वं च सम्यक्त्वम् ॥२९॥

नादंसणिस्स नाणं, नाणेण विणा न हुन्ति चरणगुणा ।
अगुणिस्स नत्थि मोक्खो, नत्थि अमोक्खस्स निव्वाणं ॥३०॥

१ तत्त्वतु गुणा कीर्तन. २ भजना.

नादर्शनिनो ज्ञानं, ज्ञानेन विना न भवन्ति चारित्रगुणाः ।
अगुणिनो नास्ति मोक्षः, नास्त्यमोक्षस्य निर्वाणम् ॥३०॥

निस्संकिय-निक्कंखिय-निव्वितिगिच्छा अमूढदिट्ठी य ।
उववूह-थिरीकरणे, वच्छल्लपभावणे अट्ठ ॥३१॥
निःशंकितं निःकांक्षितं, निर्विचिकित्स्यममूढदृष्टिश्च ।
उपबृंहास्थिरीकरणे, वात्सल्यप्रभावनेऽष्टौ ॥३१॥

सामाइयत्थ पढमं, छेदोवट्ठावणं भवे बीयं ।
परिहारविसुद्धीयं, सुहुमं तह संपरायं च ॥३२॥
सामायिकमत्र प्रथमं, छेदोपस्थापनं भवेद् द्वितीयम् ।
परिहारविशुद्धिकं, सूक्ष्मं तथा संपरायम् च ॥३२॥

अकसायमहक्खायं, छउमत्थस्स जिणस्स वा ।
एयं चयरित्तकरं, चारित्तं होइ आहियं ॥३३॥
अकषायं यथाख्यातं, छद्मस्थस्य जिनस्य वा ।
एतच्चय[१]रिक्तकरं, चारित्रं भवत्याख्यातम् ॥३३॥

तवो य दुविहो वुत्तो, बाहिरब्भन्तरो तहा ।
बाहिरो छव्विहो वुत्तो, एवमब्भन्तरो तवो ॥३४॥
तपश्च द्विविधमुक्तं, बाह्यमाभ्यन्तर तथा ।
बाह्यंषड्विधमुक्तं, एवमाभ्यन्तरं तपः ॥३४॥

नाणेण जाणई भावे, दंसणेण य सद्दहे ।
चरित्तेण निगिण्हाइ, तवेण परिसुज्झई ॥३५॥
ज्ञानेन जानाति भावान् , दर्शनेन च श्रद्धत्ते ।
चारित्रेण निगृह्णाति, तपसा परिशुध्यति ॥३५॥

खवेत्ता पुव्वकम्माइं, संजमेण तवेण य ।
सव्वदुक्खपहीणट्ठा, पक्कमन्ति महेसिणो ॥३६॥

१ कर्मने खपावनार.

क्षपयित्वा पूर्वकर्माणि, संयमेन तपसा च ।
प्रहीणसर्वदुःखार्थाः, प्रक्रामन्ति महर्षयः　　　॥३६॥
॥ त्ति बेमि ॥ इति मोक्खमग्गगई समत्ता ॥२८॥
इतिब्रवीमि—इतिमोक्षमार्गगतिः समाप्ता ॥२८॥

---

## ॥ अह सम्मत्तपरक्कमं एगूणतीसइमं अज्झयणं ॥

### ॥ अथ सम्यक्त्वपराक्रममेकोनत्रिंशत्तममध्ययनं ॥

सुयं मे आउसं-तेण भगवया एवमक्खायं । इह खलु सम्मत्तपरक्कमे नाम अज्झयणे समणेणं भगवया महावीरेणं कासवेणं पवेइए, जं सम्मं सद्दहित्ता पत्तिइत्ता रोयइत्ता फासित्ता पालइत्ता तीरित्ता कित्तइत्ता सोहइत्ता आराहित्ता आणाए अणुपालइत्ता बहवे जीवा सिज्झन्ति बुज्झन्ति मुच्चन्ति परिनिव्वायन्ति सव्वदुक्खाणमन्तं करेन्ति । तस्स णं अयमट्ठे एवमाहिज्जइ, तं जहा:—संवेगे १ निव्वेए २ धम्मसद्धा ३ गुरुसाहम्मियसुस्सूसणया ४ आलोयणया ५ निन्दणया ६ गरिहणया ७ सामाइए ८ चउव्वीसत्थवे ९ वन्दणे १० पडिक्कमणे ११ काउस्सग्गे १२ पच्चक्खाणे १३ थयथुइमंगले १४ कालपडिलेहणया १५ पायच्छित्तकरणे १६ खमावणया १७ सज्झाए १८ वायणया १९ पडिपुच्छणया २० पडियट्टणया २१ अणुप्पेहा २२ धम्मकहा २३ सुयस्स आराहणया २४ एगग्गमणसंनिवेसणया २५ संजमे २६ तवे २७ वोदाणे २८ सुहसाए २९ अप्पडिबद्धया ३० विवित्तसयणासणसेवणया ३१ विणियट्टणया ३२ संभोगपच्चक्खाणे ३३ उवहिपच्चक्खाणे ३४ आहारपच्चक्खाणे ३५ कसायपच्चक्खाणे ३६ जोगपच्चक्खाणे ३७ सरीरपच्चक्खाणे ३८ सहायपच्चक्खाणे ३९ भत्तपच्चक्खाणे

४० सब्भावपच्चक्खाणे ४१ पडिरूवणया ४२ वेयावच्चे ४३ सव्वगुणसंपण्णया ४४ वीयरागया ४५ खन्ती ४६ मुत्ती ४७ मद्दवे ४८ अज्जवे ४९ भावसच्चे ५० करणसच्चे ५१ जोगसच्चे ५२ मणगुत्तया ५३ वयगुत्तया ५४ कायगुत्तया ५५ मणसमाधारणया ५६ वयसमाधारणया ५७ कायसमाधारणया ५८ नाणसंपन्नया ५९ दंसणसंपन्नया ६० चरित्तसंपन्नया ६१ सोइन्दियनिग्गहे ६२ चक्खुन्दियनिग्गहे ६३ घाणिन्दियनिग्गहे ६४ जिब्भिन्दियनिग्गहे ६५ फासिन्दियनिग्गहे ६६ कोहविजए ६७ माणविजए ६८ मायाविजए ६९ लोहविजए ७० पेज्जदोसमिच्छादंसणविजए ७१ सेलेसी ७२ अकम्मया ॥ ७३ ॥

श्रुतं मयाऽऽयुष्मन् तेन भगवतैवमाख्यातम् । इह खलु सम्यक्त्वपराक्रमं नामाध्ययनम् श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदितं । यत्सम्यक् श्रद्धाय, प्रतीत्य, रोचयित्वा, स्पृष्ट्वा पालयित्वा तीरयित्वा कीर्तयित्वा शोधयित्वाऽऽराधयित्वाऽऽज्ञया अनुपालयित्वा बहवो जीवाः सिध्यन्ति, बुध्यन्ते, मुच्यन्ते, परिनिर्वान्ति, सर्वदुःखानामन्तं कुर्वन्ति, तस्य अयमर्थः, एवमाख्यायते तद्यथासंवेगः १ निर्वेदः २ धर्मश्रद्धा ३ गुरुसाधर्मिकशुश्रूषणम् ४ आलोचना ५ निन्दा ६ गर्हा ७ सामायिकं ८ चतुर्विंशतिस्तवः ९ वन्दनं १० प्रतिक्रमणं ११ कायोत्सर्गः १२ प्रत्याख्यानं १३ स्तवस्तुतिमंगलं १४ कालप्रतिलेखना १५ प्रायश्चित्तकरणं १६ क्षमापना १७ स्वाध्यायः १८ वाचना १९ प्रतिप्रच्छना २० परिवर्तना २१ अनुप्रेक्षा २२ धर्मकथा २३ श्रुतस्यआराधना २४ एकाग्रमनःसंनिवेशना २५ संयमः २६ तपः २७ व्यवदानं २८

सुखशायः २९ अप्रतिबद्धता ३० विविक्तशयनासनसेवना ३१ विनिवर्तना ३२ संभोगप्रत्याख्यानं ३३ उपधिप्रत्याख्यानं ३४ आहारप्रत्याख्यानं ३५ कषायप्रत्याख्यानं ३६ योगप्रत्याख्यानं ३७ शरीरप्रत्याख्यानं ३८ सहाय्यप्रत्याख्यानं ३९ भक्तप्रत्याख्यानं ४० सद्भावप्रत्याख्यानं ४१ प्रतिरूपता ४२ वैयावृत्यं ४३ सर्वगुणसंपन्नता ४४ वीतरागता ४५ क्षान्तिः ४६ मुक्तिः ४७ मार्दवं ४८ आर्जवं ४९ भावसत्यं ५० करणसत्यं ५१ योगसत्यं ५२ मनोगुप्तिता ५३ वचोगुप्तिता ५४ कायगुप्तिता ५५ मनःसमाधारणा ५६ वाक्समाधारणा ५७ कायसमाधारणा ५८ ज्ञानसंपन्नता ५९ दर्शनसंपन्नता ६० चारित्रसंपन्नता ६१ श्रोत्रेन्द्रियनिग्रहः ६२ चक्षुरिन्द्रियनिग्रहः ६३ घ्राणेन्द्रियनिग्रहः ६४ जिह्वेन्द्रियनिग्रहः ६५ स्पर्शेन्द्रियनिग्रहः ६६ क्रोधविजयः ६७ मानविजयः ६८ मायाविजयः ६९ लोभविजयः ७० रागद्वेषमिथ्यादर्शनविजयः ७१ शैलेषी ७२ अकर्मता ७३ ॥

संवेगेणं भन्ते जीवे किं जणयइ ?। संवेगेणं अणुत्तरं धम्मसद्धं जणयइ । अणुत्तराए धम्मसद्धाए संवेगं हव्वमागच्छइ । अणन्ताणुबन्धिकोहमाणमायालोभे खवेइ । नवंच कम्मं न बन्धइ । तप्पच्चइयं च णं मिच्छत्तविसोहिं काऊण दंसणाराहए भवइ । दंसणविसोहीए य णं विसुद्धाए अत्थेगइए तेणेव भवग्गहणेणं सिज्झई । विसोहीए य णं विसुद्धाए तच्चं पुणो भवग्गहणं नाइक्कमइ ॥१॥

संवेगेन भदन्त ! जीवः किं जनयति?। संवेगेनानुत्तरां धर्मश्रद्धां जनयति । अनुत्तरया धर्मश्रद्धया संवेगंशीघ्रमागच्छति । अनन्तानु

बन्धिक्रोधमानमायालोभान्क्षपयति। नवं च कर्म न बध्नाति। तत् प्रत्ययिकां च मिथ्यात्वविशुद्धिं कृत्वा दर्शनाराधको भवति। दर्शनविशुध्ध्या च विशुद्धया अप्येककः तेनैव भवग्रहणेन सिध्यति। विशुद्धया च विशुद्धया तृतीयंपुनर्भवग्रहणं नातिक्रामति॥१॥

निव्वेदेणं भन्ते जीवे किं जणयइ?। निव्वेदेणं दिव्वमाणुस तेरिच्छिएसु कामभोगेसु निव्वेयं हव्वमागच्छइ। सव्वविसएसु विरज्जइ। सव्वविसएसु विरज्जमाणे आरम्भपरिच्चायं करेइ। आरम्भपरिच्चायं करेमाणे संसारमग्गं वोच्छिन्दइ, सिद्धिमग्गं पडिवन्ने य हवइ ॥२॥

निर्वेदेन भदन्त! जीवः किं जनयति?। निर्वेदेन दिव्यमानुष्यतैरश्चेषु कामभोगेषु निर्वेदं शीघ्रमागच्छति। ततःसर्वविषयेभ्यो विरज्यति। सर्वविषयेभ्योविरज्यमान आरंभपरित्यागंकरोति। आरंभपरित्यागं-कुर्वाणः संसारमार्गंव्युच्छिनत्ति सिद्धिमार्गं प्रतिपन्नश्चभवति ॥२॥

धम्मसद्धाए णं भन्ते जीवे किं जणयइ?। धम्मसद्धाए णं सायासोक्खेसु रज्जमाणे विरज्जइ। आगारधम्मं च णं चयइ। अणगारिए णं जीवे सारीरमाणसाणं दुक्खाणं छेयणभेयण संजोगाईणं वोच्छेयं करेइ अव्वाबाहं च सुहं निव्वत्तेइ ॥३॥

धर्मश्रद्धयाभदन्त! जीवः कि जनयति?। धर्मश्रद्धया साता-सुखेषु रज्यमानो विरज्यते। अगारधर्मं च त्यजति। अनगारो जीवः शारीरमानसानां दुःखानां छेदनभेदनसंयोगादीनां व्युच्छेदं करोति। अव्याबाधं च सुखं निर्वर्तयति ॥३॥

गुरुसाहम्मियसुस्सूसणाए णं भन्ते जीवे किं जणयइ?। गुरुसाहम्मियसुस्सूसणाए णं विणयपडिवत्तिं जणयइ। विणय-पडिवन्ने य णं जीवे अणच्चासायणसीले नेरइयतिरिक्खजोणिय-

मणुस्सदेवदुग्गईओ निरुम्भइ। वण्णसंजलणभत्तिवहुमाणयाए मणुस्सदेवगईओ निवन्धई, सिद्धिं सोग्गइं च विसोहेइ। पसत्थाइं च णं विणयमूलाइं सव्वकज्जाइं साहेइ। अन्ने य वहवे जीवे विणिइत्ता भवइ ॥४॥

गुरुसाधर्मिकशुश्रुषणेन भदन्त! जीवः किं जनयति?। गुरुसाधर्मिकशुश्रुषया विनयप्रतिपत्ति जनयति। जीवः अनत्याशातनाशीलो नैरयिकतिर्यग्योनी मनुष्यदेवदुर्गतो च निरुणद्धि। वर्णसंज्वलनभक्ति वहुमानतया मनुष्यदेवगती निवध्नाति। सिद्धि सुगतिं च विशोधयति। प्रशस्तानि च विनयमूलानि सर्वकार्याणि साधयति। अन्यांश्च वहून्जीवान्विनेताभवति ॥४॥

आलोयणाए णं भन्ते जीवे किं जणयइ?। आलोयणाए णं मायानियाणमिच्छादंसणसल्लाणं मोक्खमग्गविग्घाणं अणंतसंसारवन्धणाणं उद्धरणं करेइ। उज्जुभावं च जणयइ। उज्जुभावपडिवन्ने य णं जीवे अमाई इत्थीवेयनपुंसगवेयं च न वन्धइ। पुव्ववद्धं च णं निज्जरेइ ॥५॥

आलोचनया भदन्त! जीवः किं जनयति?। आलोचनया मायानिदानमिथ्यादर्शनशल्यानां मोक्षमार्गविघ्नानामनन्तसंसारवंधनानामुध्धरणकरोति। ऋजुभावं च जनयति। ऋजुभावंप्रतिपन्नश्चजीवोऽमायी स्त्रीवेदंनपुंसकवेदं च न वध्नाति पूर्ववद्धं च निर्जरयति॥५॥

निन्दणयाए णं भन्ते जीवे किं जणयइ?। निन्दणयाए णं पच्छाणुतावं जणयइ। पच्छाणुतावेणं विरज्जमाणे करणगुणसेढिं पडिवज्जइ। करणगुणसेढीपडिवन्ने य णं अणगारे मोहणिज्जं कम्मं उग्घाएइ ॥६॥

निन्दनेन भदन्त! जीवः किं जनयति? निन्दनयापश्चात्तापं जनयति।

पश्चादनुतापेन विरज्यमाणः करणगुणश्रेणिं प्रतिपद्यते। करणगुण-श्रेणिप्रतिपन्नश्चानगारो मोहनीयं कर्मोद्घातयति ॥६॥

गरहणयाए णं भन्ते जीवे किं जणयइ?। गरहणयाए अपुर-क्कारं जणयइ। अपुरक्कारगए णं जीवे अप्पसत्थेहिंतो जोगेहिंतो नियत्तेइ, पसत्थे य पडिवज्जइ। पसत्थजोगपडिवन्ने य णं अणगारे अणन्तघाइपज्जवे खवेइ ॥७॥

गर्हया भदन्त! जीवः किं जनयति?। गर्हयाऽपुरस्कारं जनयति। अपुरस्कारगतो जीवोऽप्रशस्तेभ्यो योगेभ्यो निवर्तते प्रशस्तयोगा-न्प्रतिपद्यते। प्रशस्तयोगप्रतिपन्नश्चानगारोऽनन्तघातिनः पर्यायान्क्ष-पयति॥७॥

सामाइएणं भन्ते जीवे किं जणयइ?। सामाइएणं सावज्ज-जोगविरइं जणयइ ॥८॥

सामायिकेन भदन्त! जीवः किं जनयति?। सामायिकेन सावद्य-योगविरतिं जनयति ॥८॥

चउव्वीसत्थएणं भन्ते जीवे किं जणयइ?। चउवीसत्थएणं दंसणविसोहिं जणयइ ॥९॥

चतुर्विंशतिस्तवेन जीवः किं जनयति?। चतुर्विंशतिस्तवेनदर्शन-विशुद्धिजनयति ॥९॥

वन्दणएणं भन्ते जीवे किं जणयइ?। वन्दणएणं नीयागोयं कम्मं खवेइ। उच्चागोयं कम्मं निबन्धइ। सोहग्गं च णं अपडि-हयं आणाफलं निव्वत्तेइ। दाहिणभावं च णं जणयइ ॥१०॥

वन्दनया भदंत! जीवः किं जनयति?। वन्दनया नीचैर्गोत्रं कर्म क्षपयति। उच्चैर्गोत्रंकर्मबध्नाति। सौभाग्यं चाप्रतिहतमाज्ञाफलमुत्पाद-यति। दाक्षिण्यभावं च जनयति ॥१०॥

पडिक्कमणेणं भन्ते जीवे किं जणयइ?। प० वयछिद्दाणि

पिहेइ। पिहियवयछिद्दे पुण जीवे निरुद्धासवे असवलचरित्ते अट्ठसु पवयणमायासु उवउत्ते अपुहत्ते सुप्पणिहिए विहरइ ॥११॥

प्रतिक्रमणेन भदन्त ! जीवः किंजनयति ? । प्रतिक्रमणेनव्रत-च्छिद्राणि पिदधाति। पिहितव्रतच्छिद्रःपुनर्जीवो निरुद्धास्रवोऽशवल चारित्रश्चाष्टासु प्रवचनमातृषूपयुक्तोऽपृथक्त्वः सुप्रणिहितो विह-रति ॥११॥

काउसग्गेणं भन्ते जीवे किं जणयइ? । काउसग्गेणं तीयपडुप्पन्नं पायच्छित्तं विसोहेइ । विसुद्धपायच्छित्ते य जीवे निव्वुयहियए ओहरियभरुव्व भारवहे पसत्थज्झाणोवगए सुहं सुहेणं विहरइ ॥१२॥

कायोत्सर्गेण भदन्त ! जीवःकिं जनयति? । कायोत्सर्गेणाऽतीत-प्रत्युत्पन्नं प्रायश्चितंविशोधयति । विशुद्धप्रायश्चित्तश्चजीवो निवृत-हृदयोऽपहृतभार इवभारवहः प्रशस्तध्यानोपगतः सुखं सुखेन विहरति ॥१२॥

पच्चक्खाणेणं भन्ते जीवे किं जणयइ ? । प० आसवदाराइं निरुम्भइ । पच्चक्खाणेणं इच्छानिरोहं जणयइ इच्छानिरोहं गए य णं जीवे सव्वदव्वेसु विणीयतण्हे सीइभूए विहरई ॥१३॥

प्रत्याख्यानेन भदंत! जीवः किं जनयति? । प्रत्याख्यानेनास्रवद्वा-राणिनिरुणद्धि। प्रत्याख्यानेन इच्छानिरोधंजनयति । इच्छानिरो-धगतश्च जीवः सर्वद्रव्येषु विनीततृष्णः शीतीभूतोविहरति ॥१३॥

थयथुइमंगलेणं भन्ते जीवे कि जणयइ ? । थ० नाणदंसण-चरित्तवोहिलाभं जणयइ। नाणदंसणचरित्तवोहिलाभसंपन्ने य णं जीवे अन्तकिरियं कप्पविमाणोववत्तिगं आराहणं आराहेइ ॥१४॥

स्तवस्तुतिमङ्गलेन भदन्त ! जीवः किंजनयति? । स्तवस्तुतिमङ्-गलेन ज्ञानदर्शनचारित्रबोधिलाभं जनयति? । ज्ञानदर्शनचारित्रबोधि-

लाभसंपन्नश्च जीवोऽन्तक्रियां . कल्पविमानोत्पत्तिकामाराधनामाराध्नोति ॥१४॥

कालपडिलेहणयाए णं भन्ते जीवे किं जणयइ ?। का० नाणावरणिज्जं कम्मं खवेइ ॥१५॥

कालप्रतिलेखनया भदन्त ! जीवः किं जनयति ?। कालप्रतिलेखनया ज्ञानावरणीयं कर्मक्षपयति ॥१५॥

पायच्छित्तकरणेणं भन्ते जीवे किं जणयइ ?। पा० पावकम्मविसोहिं जणयइ। निरइयारे आवि भवइ। सम्मं च णं पायच्छित्तं पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ, आयारं च आयारफलं च आराहेइ ॥१६॥

प्रायश्चित्तकरणेन भदन्त ! जीवः किं जनयति ?। प्रायश्चित्तकरणेन पापविशुध्धिं जनयति। निरतिचारश्चापिभवति। सम्यक् च प्रायश्चित्तं प्रतिपद्यमानः सम्यक्त्वमार्गं च सम्यक्त्वमार्गफलं च विशोधयति आचारमाचारफलं चाराधयति॥१६॥

खमावणयाए णं भन्ते जीवे किं जणयइ ?। ख० पल्हायणभावं जणयइ। पल्हायणभावमुवगए य सव्वपाणभूयजीवसत्तेसु मित्तीभावमुप्पाएइ मित्तीभावमुवगए यावि जीवे भावविसोहिं काऊण निब्भए भवइ ॥१७॥

क्षमापनया भदन्त ! जीवःकिं जनयति ?। क्षमापनया प्रह्लादनभावं जनयति। प्रहलादभावमुपगतश्चः सर्वप्राणिभूतजीवसत्वेषु मैत्रीभावमुत्पादयति मैत्रीभावमुपगतश्चापिजीवः भावविशुद्धिंकृत्वा निर्भयो भवति ॥१७॥

सज्झाएणं भन्ते जीवे किं जणयइ ?। स० नाणावरणिज्जं कम्मं खवेइ ॥१८॥

स्वाध्यायेन भदन्त ! जीवः किं जनयति ?। स्वाध्यायेन ज्ञानावरणीयं कर्म क्षपयति ॥१८॥

वायणाए णं भन्ते जीवे किं जणयइ ?। वा० निज्जरं जणयइ। सुयस्स य अणुसज्जणाए अणासायणाए वट्टए। सुयस्स अणुसज्जणाए अणासायणाए वट्टमाणे तित्थधम्मं अवलम्बइ। तित्थधम्मं अवलम्बमाणे महानिज्जरे महापज्जवसाणे भवइ ॥१९॥

वाचनया भदन्त ! जीवः किं जनयति ?। वाचनया निर्जरां जनयति। सूत्रस्य चानुसज्जनयाऽनासातनायां वर्तते। सूत्रस्यानासातनायां वर्तमानस्तीर्थधर्ममवलम्बते। तीर्थधर्ममवलम्बमानो महानिर्जरो महापर्यवसानो भवति ॥१९॥

पडिपुच्छणयाए णं भन्ते जीवे किं जणयइ ?। प० सुत्तत्थतदुभयाइं विसोहेइ। कंखामोहणिज्जं कम्मं वोच्छिन्दइ ॥२०॥

प्रतिप्रच्छनया भदन्त ! जीवः किं जनयति ?। प्रतिप्रच्छनया सूत्रार्थतदुभयानि विशोधयति। कांक्षामोहनीयं कर्म व्युच्छिनत्ति ॥२०॥

परियट्टणाए णं भन्ते जीवे किं जणयइ ?। प० वंजणाइं जणयइ, वंजणलद्धिं च उप्पाएइ ॥२१॥

परिवर्तनया भदंत ! जीवः किं जनयति ?। परिवर्तनया जीवः व्यंजनानि जनयति। व्यंजनलब्धिंचोत्पादयति ॥२१॥

अणुप्पेहाए णं भन्ते जीवे किं जणयइ ?। अ० आउयवज्जाओ सत्तकम्मप्पगडीओ घणियबन्धणबद्धाओ सिढिलबन्धणबद्धाओ पकरेइ। दीहकालट्ठिइयाओ हस्सकालट्ठिइयाओ पकरेइ। तिव्वाणुभावाओ मन्दाणुभावाओ पकरेइ। (बहुपएसग्गाओ अप्पपएसग्गाओ पकरेइ) आउयं च णं कम्मं सिया बन्धइ, सिया

नो बन्धइ। असायावेयणिज्जं च णं कम्मं नो भुज्जो भुज्जो उवचिणाइ। अणाइयं च णं अणवदग्गं दीहमद्धं चाउरन्तं संसारकन्तारं खिप्पामेव वीइवयइ ॥२२॥

अनुप्रेक्षया भदन्त! किं जनयति?। अनुप्रेक्षयाऽऽयुवर्ज्जाः सप्तकर्मप्रकृतीर्गाढबन्धनबद्धाःशिथिलबन्धनबध्धाःप्रकरोति। दीर्घकालस्थितिका ह्रस्वकालस्थितिकाःप्रकरोति। तीव्रानुभावा मन्दानुभावाःप्रकरोति। (बहुप्रदेशाग्रा अल्पप्रदेशाग्राः प्रकरोति।) आयुःकर्म च स्याद्‌बध्नातिस्यान्नबध्नाति। आशातावेदनीयंचकर्मनो भूयोभूयउपचिनोति। अनादिकं चाऽनवदग्रं दीर्घाध्वं संसारकान्तारं क्षिप्रमेवं व्यतिव्रजति ॥२२॥

धम्मकहाए णं भन्ते जीवे किं जणयइ?। ध० निज्जरं जणयइ। धम्मकहाए णं पवयणं पभावेइ। पवयण पभावेणं जीवे आगमेसस्स भद्दत्ताए कम्मं निबन्धइ ॥२३॥

धर्मकथया भदन्त! जीवःकि जनयति?। धर्मकथयानिर्जरां जनयति धर्मकथया प्रवचनंप्रभावयति। प्रवचन प्रभावेणजीव आगमिष्यतिकाले भद्रतया कर्म निबध्नाति ॥२३॥

सुयस्स आराहणयाए णं भन्ते जीवे किं जणयइ?। सु० अन्नाणं खवेइ न य संकिलिस्सइ ॥२४॥

श्रुतस्याऽऽराधनया भदन्त! जीवःकिं जनयति?। श्रुतस्याराधनयाऽज्ञानं क्षपयति न च संक्लिश्यति ॥२४॥

एगग्गमणसंनिवेसणयाए णं भन्ते जीवे कि जणयइ?। ए० चित्तनिरोहं करेइ ॥२५॥

एकाग्रमनःसंनिवेशनया भदन्त! जीवःकि जनयति?। एकाग्रमनःसंनिवेशनया चित्तनिरोधं करोति ॥२५॥

संजमेणं भन्ते जीवे किं जणयइ ? । सं० अणण्हयत्तं जणयइ ॥२६॥

संयमेन भदन्त ! जीवः किं जनयति ? । संयमेनानहंस्कत्वं जनयति ॥२६॥

तवेणं भन्ते जीवे किं जणयइ ? । तवेणं वोदाणं जणयइ॥२७॥

तपसाभदन्त! जीवःकिंजनयति? । तपसाव्यवदानं जनयति॥२७॥

वोदाणेणं भन्ते जीवे किं जणयइ? । वो० अकिरियं जणयइ । अकिरियाए भवित्ता तओ पच्छा सिज्झइ, बुज्झइ मुच्चइ परिनिव्वायइ सव्वदुक्खाणमन्तं करेइ ॥२८॥

व्यवदानेन भदन्त ! जीवः किं जनयति ? । व्यवदानेनाक्रियां-जनयति,अक्रियोभूत्वा ततःपश्चात्सिध्यति, बुध्यते, मुच्यते, परिनिर्वाति सर्वदुःखानामन्तं करोति ॥२८॥

सुहसाएण भन्ते जीवे किं जणयइ ? । सु० अणुस्सुयत्तं जणयइ । अणुस्सुयाए णं जीवे अणुकम्पए अणुब्भडे विगयसोगे चरित्तमोहणिज्जं कम्मं खवेइ ॥२९॥

सुखशातेन भदन्त! जीवःकिं जनयति? । सुखशातेनानुत्सुकत्वं-जनयति । अनुत्सुकोजीवोऽनुकम्पकोऽनुद्भटो विगतशोकः चारित्र-मोहनीयं कर्म क्षपयति ॥२९॥

अपडिवद्धयाए णं भन्ते जीवे किं जणयइ ? । अ० निस्संगत्तं जणयइ । निस्संगत्तेणं जीवे एगे एगग्गचित्ते दिया य राओ य असज्जमाणे अप्पडिवद्धे यावि विहरइ ॥३०॥

अप्रतिवद्धतया भदन्त ! जीवःकिं जनयति? । अप्रतिवद्धतया-निःसंगत्वंजनयति । निःसंगत्वेन जीव एकएकाग्रचित्तोदिवा-चरात्रौचाऽसजन्नप्रतिवद्धश्चापिविहरति ॥३०॥

विवित्तसयणासणयाए णं भन्ते जीवे किं जणयइ? । वि० चरित्तगुत्तिं जणयइ । चरित्तगुत्ते य णं जीवे विवित्ताहारे दढचरित्ते एगन्तरए मोक्खभावपडिवन्ने अट्ठविहकम्मगंठिं निज्जरेइ ॥३१॥

विविक्तशयनासनतया भदन्त! जीवः किं जनयति? । विविक्तशयनासनतया चारित्रगुप्तिजनयति। गुप्तचारित्रो जीवो विविक्ताहारो दृढ चारित्र एकान्तरतो मोक्षभावप्रतिपन्नोऽष्टविधाकर्मग्रन्थि निर्जरयति ॥३१॥

विनियट्टयाए णं भन्ते जीवे किं जणयइ? । वि० पावकम्माणं अकरणयाए अब्भुट्ठेइ । पुव्वबद्धाण य निज्जरणयाए तं नियत्तेइ । तओ पच्छा चाउरन्तं संसारकन्तारं वीइवयइ ॥३२॥

विनिवर्तनया भदन्त! जीवः कि जनयति? । पापानां कर्मणामकरणतयाऽभ्युत्तिष्ठति। पूर्वबद्धानां च निर्जरणया तन्निवर्तयति। ततः पश्चाश्चातुरन्तं संसारकान्तारं व्यतिव्रजति ॥३२॥

संभोगपच्चक्खाणेणं भन्ते जीवे किं जणयइ? । सं० आलम्बणाइं खवेइ । निरालम्बणस्स य आयट्ठिया योगा भवन्ति । सएणं लाभेणं संतुस्सइ, परलाभं नो आसादेइ, परलाभं नो तक्केइ, नो पीहेइ, नो पत्थेइ, नो अभिलसइ । परलाभं अणस्सायमाणे अतक्केमाणे अपीहमाणे अपत्थेमाणे अणभिलसमाणे दुच्चं सुहसेज्जं उवसंपज्जित्ता णं विहरइ ॥३३॥

संभोगप्रत्याख्यानेन भदन्त! जीवः कि जनयति? । संभोगप्रत्याख्यानेन जीव आलम्बनानिक्षपयति। निरालम्बनस्य चायतार्था योगाभवन्ति स्वेन लाभेन सन्तुष्यति। परस्यलाभंनास्वादयति। नोतर्कयति नोस्पृहयति नोप्रार्थयति नोऽभिलषति परस्यलाभमनास्वादयन्, अतर्कयन्

अस्पृहयन् , अप्रार्थयन्, अनभिलषन् , द्वितीयां सुखशय्यामुपसंपद्य-
विहरति ॥३३॥

उवहिपच्चक्खाणेणं भन्ते जीवे किं जणयइ ?। उ० अपलिमन्थं जणयइ। निरुवहिए णं जीवे निक्कंखी उवहिमन्तरेण य न संकिलिस्सइ ॥३४॥

उपधिप्रत्याख्यानेनभदन्त! जीवःकि जनयति?। उपधिप्रत्याख्यानेनापरिमन्थं जनयति। निरुपधिको जीवो निराकांक्ष उपधिमन्तरेण च नसंक्लिश्यते ॥३४॥

आहारपच्चक्खाणेणं भन्ते जीवे किं जणयइ?। आ० जीवियासंसप्पओगं वोच्छिन्दइ। जीवियासंसप्पओगं वोच्छिन्दित्ता जीवे आहारमन्तरेणं न संकिलिस्सइ ॥३५॥

आहारप्रत्याख्यानेनभदन्त! जीवःकि जनयति?। आहारप्रत्याख्यानेन जीविताशंसाप्रयोगं व्यवच्छिनत्ति। जीविताशंसाप्रयोगं व्यवछिद्य जीव आहारमन्तरेण न संक्लिश्यते॥३५॥

कसायपच्चक्खाणेणं भन्ते जीवे किं जणयइ?। क० वीयरागभावं जणयइ। वीयरागभावपडिवन्ने वि य णं जीवे समसुहदुक्खे भवइ ॥३६॥

कषायप्रत्याख्यानेन भदन्त! जीवःकिं जनयति?। कषायप्रत्याख्यानेन वीतरागभावं जनयति। वीतरागभावप्रतिपन्नोजीवः समसुखदुःखोभवति ॥३६॥

जोगपच्चक्खाणेणं भन्ते जीवे कि जणयइ ?। जो० अजोगत्तं जणयइ। अजोगी णं जीवे नवं कम्मं न बन्धइ, पुव्वबद्धं निज्जरेइ ॥३७॥

योगप्रत्याख्यानेन भदन्त! जीवःकिं जनयति?। योगप्रत्याख्याने-नायोगित्वंजनयति। अयोगी हि जीवो नवं कर्म न बध्नाति पूर्वबद्धं च निर्जरयति ॥३७॥

सरीरपच्चक्खाणेणं भन्ते जीवे किं जणयइ?। स० सिद्धाइ-सयगुणकित्तणं- निव्वत्तेइ। सिद्धाइसयगुणसंपन्ने य णं जीवे लोगग्गमुवगए परमसुही भवइ ॥३८॥

शरीरप्रत्याख्यानेन भदन्त! जीवः किं जनयति? शरीरप्रत्याख्या-नेन सिद्धातिशयगुणकीर्तनं निर्वर्तयति। सिद्धातिशयगुणसंपन्नो जीवो-लोकाग्रमुपगतः परमसुखीभवति ॥३८॥

सहायपच्चक्खाणेणं भन्ते जीवे किं जणयइ?। स० एगीभावं जणयइ। एगीभावभूए वि य णं जीवे एगत्तं भावेमाणे अप्प-सद्दे अप्पझंझे अप्पकलहे अप्पकसाए अप्पतुमंतुमे संजमबहुले संवरबहुले समाहिए यावि भवइ ॥३९॥

सहाय्यप्रत्याख्यानेन भदन्त! जीवःकिं जनयति?। सहाय्यप्रत्या-ख्यानेनैकीभावं जनयति। एकीभावभूतोऽपि य जीवः एकत्वंभाव-यन्नल्पशब्दोऽल्पझंझोऽल्पकलहोऽल्पकषायोऽल्पत्वंत्वः संयमबहुलः संवरबहुलः समाधिबहुलः समाहितश्चापिभवति ॥३९॥

भत्तपच्चक्खाणेणं भन्ते जीवे किं जणयइ?। भ० अणेगाइं भवसयाइं निरुम्भइ ॥४०॥

भक्तप्रत्याख्यानेन भदन्त! जीवःकिं जनयति?। भक्तप्रत्याख्याने-नानेकानि भवशतानि निरुणद्धि ॥४०॥

सब्भावपच्चक्खाणेणं भन्ते जीवे किं जणयइ?। स० अनि-यट्टिं जणयइ। अनियट्टिपडिवन्ने य अणगारे चत्तारि केवलि-

कम्मंसे खवेइ, तं जहा-वेयणिज्जं आउयं नामं गोयं । तओ पच्छा सिज्झइ बुज्झइ मुच्चइ सव्वदुक्खाणमन्तं करेइ ॥४१॥

सद्भावप्रत्याख्यानेन भदंत! जीवः किं जनयति ?। सद्भावप्रत्याख्यानेनानिर्वृत्तिं जनयति । अनिर्वृत्तिं प्रतिपन्नोऽनगारः चत्वारि केवलिसत्कर्मांशान् क्षपयति। तद्यथा वेदनीयमायुःकर्म, नामकर्म, गोत्रकर्म, तत्पश्चात्सिध्यति, बुध्यते, मुच्यते, परिनिर्वाति सर्वदुःखानामन्तंकरोति ॥४१॥

पडिरूवयाए णं भन्ते जीवे किं जणयइ ?। प० लाघवियं जणयइ । लघुभूए णं जीवे अप्पमत्ते पागडलिंगे पसत्थलिंगे विसुद्धसम्मत्ते सत्तसमिइसमत्ते सव्वपाणभूयजीवसत्तेसु वीससणिज्जरूवे अप्पडिलेहे जिइन्दिए विउलतवसमिइसमन्नागए यावि भवइ ॥४२॥

प्रतिरूपतया भदन्त! जीवः किं जनयति? । प्रतिरूपतया लाघविकतां जनयति । लघूभूतश्चजीवोऽप्रमत्तः प्रकटलिंगः प्रशस्त लिंगोविशुद्धसम्यक्त्वः समाप्तसत्यसमितिः सर्वप्राणभूतजीवसत्वेषु विश्वसनीयरूपोऽल्पप्रतिलेख जितेन्द्रियो विपुलतपःसमिति समन्वागतश्चापि भवति ॥४२॥

वेयावच्चेणं भन्ते जीवे किं जणयइ? । वे० तित्थयरनामगोत्तं कम्मं निबन्धइ ॥४३॥

वैयावृत्त्येन भदन्त! जीवः किं जनयति ? । वैयावृत्त्येन तीर्थंकरनामगोत्रं कर्म निबध्नाति ॥४३॥

सव्वगुणसंपन्नयाए णं भन्ते जीवे किं जणयइ ? । स० अपुणरावत्तिं जणयइ । अपुणरावत्तिं पत्तए य णं जीवे सारीरमाणसाणं दुक्खाणं नो भागी भवइ ॥४४॥

सर्वगुणसंपन्नतया भदन्त ! जीवःकिं जनयति? । सर्वगुणसंपन्नतयाऽपुनरावृत्ति जनयति । अपुनरावृत्ति प्राप्तश्चजीवः शरीरमानसानां दुःखानां नो भागी भवति ॥४४॥

वीयरागयाए णं भन्ते जीवे किं जणयइ? । वी० नेहाणुबन्धणाणि तण्हाणुबन्धणाणि य वोच्छिन्दइ, मणुन्नामणुन्नेसु सद्दफरिसरूवरसगन्धेसु चेव विरज्जइ ॥४५॥

वीतरागतया भदन्त! जीवःकि जनयति? । वीतरागतया स्नेहानुबन्धनानि, तृष्णानुबन्धनानि च व्युच्छिनत्ति । मनोज्ञामनोज्ञेषु शब्दस्पर्शरूपरसगन्धेषु चैव विरज्यते ॥४५॥

खन्तीए णं भन्ते जीवे किं जणयइ ? । ख० परीसहे जिणइ ॥४६॥

क्षान्त्या भदन्त ! जीवःकिं जनयति ? । क्षान्त्या परिषहान् जयति ॥४६॥

मुत्तीए णं भन्ते जीवे किं जणयइ । मु० अकिंचणं जणयइ । अकिंचणे य जीवे अत्थलोलाणं पुरिसाणं अपत्थणिज्जो भवइ ॥४७॥

मुक्त्या भदन्त ! जीवःकि जनयति? । मुक्त्याऽऽकिंचन्यं जनयति । अकिंचनश्च जीवोऽर्थलोलानां पुरुषाणामप्रार्थनीयो भवति ॥४७॥

अज्जवयाए णं भन्ते जीवे किं जणयइ? । अ० काउज्जुययं भावुज्जुययं भासुज्जुययं अविसंवायणं जणयइ । अविसंवायणसंपन्नयाए णं जीवे धम्मस्स आराहए भवइ ॥४८॥

आर्जवेन भदन्त! जीवःकि जनयति ? । आर्जवेन कायर्जुकतां

भावर्जुकतां भाषर्जुकतां अविसंवादनं जनयति। अविसंवादन संपन्नतया जीवो धर्मस्याराधको भवति ४८॥

मद्दवयाए णं भन्ते जीवे किं जणयइ ?। म० अणुस्सियत्तं जणयइ। अणुस्सियत्तेण जीवे मिउमद्दवसंपन्ने अट्ठ मयट्ठाणाइं निट्ठावेइ ॥४९॥

मार्दवेन भदन्त! जीवःकि जनयति?। मार्दवेनानुत्सुकत्वं जनयति। अनुत्सुकत्वेन जीवो मृदुमार्दवसंपन्नोऽष्टौ मदस्थानानि निष्ठापयति (क्षपयति) ॥४९॥

भावसच्चेणं भन्ते जीवे किं जणयइ ?। भा० भावविसोहिं जणयइ। भावविसोहिए वट्टमाणे जीवे अरहन्तपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठेइ। अरहन्तपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठित्ता परलोगधम्मस्स आराहए भवइ ॥५०॥

भावसत्येन भदन्त ! जीवःकि जनयति? । भावसत्येन भावविशुद्धिं जनयति। भावविशुद्ध्यां वर्तमानो जीवोऽर्हत्प्रज्ञप्तस्य धर्मस्याराधनायै अभ्युत्तिष्ठते। अर्हत्प्रज्ञप्तस्य धर्मस्याराधनतायै अभ्युत्थाय परलोकधर्मस्याराधको भवति ॥५०॥

करणसच्चेणं भन्ते जीवे किं जणयइ ?। क० करणसत्तिं जणयइ। करणसच्चे वट्टमाणे जीवे जहावाई तहाकारी यावि भवइ ॥५१॥

करणसत्येन भदन्त ! जीवःकि जनयति? । करणसत्येन करण शक्ति जनयति। करणसत्ये वर्तमानो जीवो यथावादी तथाकारी चापि भवति ॥५१॥

जोग सच्चेणं भन्ते जीवे किं जणयइ?। जो० जोगं विसोहेइ॥५२॥

योगसत्येन भदन्त ! जीवःकिं जनयति? । योगसत्येन योगान् विशोधयति ॥५२॥

मणगुत्तयाए णं भन्ते जीवे किं जणयइ ? । म० जीवे एगग्गं जणयइ । एगग्गचित्ते णं जीवे मणगुत्ते संजमाराहए भवइ ॥५३॥

मनोगुप्त्या भदन्त ! जीवःकिं जनयति ? । मनोगुप्त्या जीव एकाग्र्यं जनयति । एकाग्रचित्तेन जीवो मनोगुप्तः संयमाराधको भवति ॥५३॥

वयगुत्तयाए णं भन्ते जीवे किं जणयइ ? । व० निव्वियारं जणयइ । निव्वियारे णं जीवे वइगुत्ते अज्झप्पजोगसाहणजुत्ते यावि विहरइ ॥५४॥

वाग्गुप्त्या भदन्त! जीवःकिं जनयति? । वाग्गुप्त्या निर्विकारित्वं जनयति । निर्विकारो जीवो वागगुप्तोऽध्यात्मयोगसाधनयुक्तश्चापि विरहति ॥५४॥

कायगुत्तयाए णं भन्ते जीवे किं जणयइ ? । का० संवरं जणयइ । संवरेणं कायगुत्ते पुणो पावासवनिरोहं करेइ ॥५५॥

कायगुप्त्या भदन्त ! जीवःकिं जनयति ? । कायगुप्त्या संवरं जनयति । सवरेण कायगुप्तः पुनःपापास्रवनिरोधं करोति ॥५५॥

मणसमाहारणयाए णं भन्ते जीवे किं जणयइ ? । म० एगग्गं जणयइ । एगग्गं जणइत्ता नाणपज्जवे जणयइ । नाणपज्जवे जणइत्ता सम्मत्तं विसोहेइ मिच्छत्तं च निज्जरेइ ॥५६॥

मनःसमाधारणया भदन्त! जीवः किं जनयति? । मनःसमाधारणयैकाग्र्यं जनयति । एकाग्र्यं जनयित्वा ज्ञानपर्यवान् जनयति । ज्ञानपर्यवान् जनयित्वा सम्यक्त्वं विशोधयति मिथ्यात्वं च निर्जरयति ॥५६॥

वयसमाहारणयाए भन्ते जीवे किं जणयइ ?। व० वयसमाहारणदंसणपज्जये विसोहेइ। वयसाहारणदंसणपज्जवे विसोहित्ता सुलहबोहियत्तं निव्वत्तेइ, दुल्लहबोहियत्तं निज्जरेइ ॥५७॥

वाक्समाधारणया भदन्त ! जीवः किं जनयति? । वाक्समाधारणया वाक्साधारणदर्शनपर्यवान् विशोधयति । वाक्साधारणदर्शन पर्यवान विशोध्य सुलभबोधिकत्वं निर्वर्तयति। दुर्लभबोधिकत्वं निर्जरयति ॥५७॥

कायसमाहारणयाए णं भन्ते जीवे कि जणयइ? । का० चरित्तपज्जवे विसोहेइ । चरित्तपज्जवे विसोहिता अहक्खायचरित्तं विसोहेइ। अहक्खायचरित्तं विसोहेत्ता चत्तारि केवलिकम्मंसे खवेइ। तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वायइ सव्व दुक्खाणमन्तं करेइ ॥५८॥

कायसमाधारणया भदन्त ! जीवः किंजनयति? । कायसमाधारणया चारित्रपर्यवान्विशोधयति। चारित्रपर्यवान्विशोध्य यथाख्यात चारित्रं विशोधयति । यथाख्यातचारित्रं विशोध्य चतुरः केवलि कर्मांशान् क्षपयति । ततः पश्चात्सिध्यति, बुध्यते, मुच्यते, परिनिर्वाति, सर्वदुःखानामन्तं करोति ॥५८॥

नाणसंपन्नयाए णं भन्ते जीवे किं जणयइ ?। ना० जीवे सव्वभावाहिगमं जणयइ। नाणसंपन्ने णं जीवे चाउरन्ते संसारकन्तारे न विणस्सइ । जहा सूई ससुत्ता न विणस्सइ तहा जीवे ससुत्ते संसारे न विणस्सइ । नाणविणयतवचरित्तजोगे संपाउणइ, ससमयपरसमयविसारए य असंघायणिज्जे भवइ ॥५९॥

ज्ञानसंपन्नतया भदन्त! जीवः किं जनयति? । ज्ञानसंपन्नतया जीवः सर्वभावाभिगमं जनयति । ज्ञानसंपन्नो जीवश्चातुरन्ते संसारकान्तारे न विनश्यति । यथा सूची ससूत्रा न विनश्यति तथा जीवः ससूत्रः संसारे न विनश्यति । ज्ञानविनयतपःचारित्रयोगान् संप्राप्नोति स्वसमयपरसमयविशारदश्चासंघातनीयो भवति ॥५९॥

दंसणसंपन्नयाए णं भन्ते जीवे किं जणयइ ?। दं० भवमिच्छत्तछेयणं करेइ, परं न विज्झायइ । परं अविज्झायमाणे अणुत्तरेणं नाणदंसणेणं अप्पाणं संजोएमाणे सम्मं भावेमाणे विहरइ ॥६०॥

दर्शनसंपन्नतया भदन्त ! जीवः किं जनयति ? । दर्शनसंपन्नतया भवमिथ्यात्वच्छेदनं करोति । परं न विध्यापयति । परमविध्यापयन्ननुत्तरेण ज्ञानदर्शनेनात्मानं संयोजयन् सम्यग् भावयन् विहरति ॥६०॥

चरित्तसंपन्नयाए णं भन्ते जीवे किं जणयइ?। च० सेलेसीभावं जणयइ । सेलेसिं पडिवन्ने य अणगारे चत्तारि केवलिकम्मंसे खवेइ । तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वायइ सव्वदुक्खाणमन्तं करेइ ॥६१॥

चारित्रसंपन्नतया भदन्त! जीवः किं जनयति? । चारित्रसंपन्नतया शैलेषीभावं जनयति । शैलेषीप्रतिपन्नश्चाऽनगारः चतुरः केवलिकर्मांशान् क्षपयति । ततः पश्चात्सिध्यति, बुध्यते, मुच्यते सर्वदुःखानामन्तंकरोति ॥६१॥

सोइन्दियनिग्गहेणं भन्ते जीवे किं जणयइ?। सो० मणुन्नामणुन्नेसु सद्देसु रागदोसनिग्गहं जणयइ । तप्पच्चइयं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६२॥

श्रोत्रेन्द्रियनिग्रहेण जीवः किं जनयति?। श्रोत्रेन्द्रियनिग्रहेण मनोज्ञामनोज्ञेषु शब्देषु रागद्वेषनिग्रहं जनयति। रागद्वेषोत्पन्नं तत्प्रत्ययं कर्म न बध्नाति। पूर्वबद्धं च निर्जरयति ॥६२॥

चक्खुन्दियनिग्गहेणं भन्ते जीवे किं जणयइ?। च० मणुन्नामणुन्नेसु रूवेसु रागदोसनिग्गहं जणयइ। तप्पच्चइयं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६३॥

चक्षुरिन्द्रियनिग्रहेण भदन्त! जीवः किं जनयति?। चक्षुरिन्द्रियनिग्रहेण मनोज्ञामनोज्ञेषु रूपेषु रागद्वेषनिग्रहं जनयति। तत्प्रत्ययं कर्म न बध्नाति। पूर्वबद्धं च निर्जरयति ॥६३॥

घाणिन्दिय निग्गहेणं भन्ते जीवे किं जणयइ?। घा० मणुन्नामणुन्नेसु गन्धेसु रागदोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६४॥

घ्राणेन्द्रियनिग्रहेण भदन्त! जीवः किं जनयति?। घ्राणेन्द्रियनिग्रहेण मनोज्ञामनोज्ञेषु गन्धेषु रागद्वेषनिग्रहं जनयति। तत्प्रत्ययं कर्म न बध्नाति। पूर्वबद्धं च निर्जरयति ॥६४॥

जिब्भिन्दियनिग्गहेणं भन्ते जीवे किं जणयइ। जि० मणुन्नामणुन्नेसु रसेसु रागदोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६५॥

जिह्वेन्द्रियनिग्रहेण भदन्त! जीवः किं जनयति?। जिह्वेन्द्रियनिग्रहेण मनोज्ञामनोज्ञेषु रसेषु रागद्वेषनिग्रहं जनयति। तत्प्रत्ययं कर्म न बध्नाति। पूर्वबद्धं च निर्जरयति ॥६५॥

फासिन्दियनिग्गहेणं भन्ते जीवे किं जणयइ?। फा० मणुन्नामणुन्नेसु फासेसु रागदोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६६॥

स्पर्शेन्द्रियनिग्रहेण भदन्त ! जीवः किं जनयति ?। स्पर्शेन्द्रिय निग्रहेण मनोज्ञामनोज्ञेषु स्पर्शेषु रागद्वेषनिग्रहं जनयति। तत्प्र-त्ययं कर्म न बध्नाति। पूर्वबध्धं च निर्जरयति ॥६६॥

कोह विजएणं भन्ते जीवे किं जणयइ? । को० खन्तिं जणयइ, कोहवेयणिज्जं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६७॥

क्रोधविजयेन भदन्त ! जीवः कि जनयति ?। क्रोधविजयेन क्षान्ति जनयति। क्रोधवेदनीयं कर्म न बध्नाति पूर्वबध्धं च निर्जरयति ॥६७॥

माणविजएणं भन्ते जीवे किं जणयइ ?। मा० मद्दवं जणयइ, माणवेयणिज्जं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६८॥

मानविजयेन भदन्त ! जीवःकि जनयति?। मानविजयेन मार्दवं जनयति। मानवेदनीयं कर्म न बध्नाति पूर्वबध्धं च निर्जरयति॥६८॥

मायाविजएणं भन्ते जीवे किं जणयइ ?। मा० अज्जवं जणयइ। मायावेयणिज्जं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥६९॥

मायाविजयेन भदन्त! जीवःकि जनयति?। मायाविजयेनार्जवं जनयति। मायावेदनीयं कर्म न बध्नाति। पूर्वबद्धं च निर्जरयति॥६९॥

लोभविजएणं भन्ते जीवे किं जणयइ ?। लो० संतोसं जणयइ, लोभवेयणिज्जं कम्मं न बन्धइ, पुव्वबद्धं च निज्जरेइ ॥७०॥

लोभविजयेन भदन्त! जीवःकि जनयति?। लोभविजयेन संतोषं जनयति। लोभवेदनीयं कर्म न बध्नाति। पूर्वबद्धं च निर्जरयति॥७०॥

पिज्जदोसमिच्छादंसणविजएणं भन्ते जीवे किं जणयइ? । पि० नाणदंसणचरित्ताराहणयाए अब्भुट्ठेइ। अट्ठविहस्स कम्म-स्स कम्मगण्ठिविमोयणयाए तप्पढमयाए जहाणुपुव्वीए अट्ठ-

वीसइविहं मोहणिज्जं कम्मं उग्घाएइ, पञ्चविहं नाणावरणिज्जं, नवविहं दंसणावरणिज्जं, पंचविहं अन्तराइयं, एए तिन्नि वि कम्मंसे जुगवं खवेइ। तओ पच्छा अणुत्तरं कसिणंपडिपुण्णं निरावरणं वितिमिरं विसुद्धं लोगालोगप्पभावं केवलवरनाण-दंसणं समुप्पादेइ। जाव सजोगी भवइ, ताव ईरियावहियं कम्मं निबन्धइ सुहफरिसं दुसमयठिइयं। तं पढमसमए बद्धं, बिइयसमए वेइयं, तइयसमए निज्जिण्णं, तं बद्धं पुट्ठं उदीरियं वेइयं निज्जिण्णं सेयाले य अकम्मया च भवइ॥७१॥

प्रेमद्वेषमिथ्यादर्शनविजयेन भदन्त! जीवः किं जनयति?। रागद्वेषमिथ्यादर्शनविजयेन ज्ञानदर्शनचारित्राराधनायामभ्युत्तिष्ठते। अष्टविधस्य कर्मणः कर्मग्रन्थिविमोचनायै तत्प्रथमतया यथानुपूर्व्या अष्टाविंशतिविधं मोहनीयं कर्मोद्घातयति। पंचविधं ज्ञानावरणीयं, नवविधं दर्शनावरणीयं, पंचविधमन्तरायिकमेतानि त्रीण्यपि कर्माणि युगपत् क्षपयति। ततः पश्चादनुत्तरं कृत्स्नं प्रतिपूर्णं निरावरणं वितिमिरं विशुद्धं लोकालोकप्रभावं केवलवरज्ञानदर्शनं समुत्पादयति। यावत्सयोगी भवति तावदैर्यापथिकं कर्म बध्नाति। सुखस्पर्शं द्विसमयस्थितिकं तत् प्रथमसमये बद्धं द्वितीयसमये वेदितं तृतीयसमये निर्जीर्णं तद्बद्धं स्पृष्टमुदीरितं वेदितं निर्जीर्णमेष्यत्काले चाकर्मा भवति ॥७१

अह आउयं पालइत्ता अन्तोमुहुत्तद्धावसेसाए जोगनिरोहं करेमाणे सुहुमकिरियं अप्पडिवाइं सुक्कज्झाणं झायमाणे तप्पढमयाए मणजोगं निरुम्भइ, वइजोगं निरुम्भइ, कायजोगं निरुम्भइ, आणपाणुनिरोहं करेइ, ईसिपंचरहस्सक्खरुच्चारणद्धाए य णं अणगारे समुच्छिन्नकिरियं अनियट्टिसुक्कज्झाणं झियाय-

माणे वेयणिज्जं आउयं नामं गोत्तं च एए चत्तारि कम्मंसे जुगवं खवेइ ॥७२॥

अथ यावदायुः पालयित्वाऽन्तर्मुहूर्ताद्धावशेषायुष्कः(सन्)योगनिरोधं करिष्यमाणः सूक्ष्मक्रियमप्रतिपाति शुक्लध्यानं ध्यायन् तत्प्रथमतया मनोयोगंनिरुणद्धि(मनोयोगंनिरुध्य)वाग्योगं निरुणद्धि काययोगंनिरुणध्यन्न पाननिरोधं करोति।(कृत्वा)पंचह्रस्वाक्षरोच्चाराद्धायां चानगारः समुच्छिन्नक्रियमनिवृत्तिशुक्लध्यानं ध्यायन्वेदनीयमायुर्नाम गोत्रं चैतान् चतुरः कर्मांशान् युगपत्क्षपयति ॥७२॥

तओ ओरालियतेयकम्माइं सव्वाहिं विप्पजहणाहिं विप्पजहित्ता उज्जुसेढिपत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेणं तत्थ गन्ता सागरोवउत्ते सिज्झइ बुज्झइ जाव अन्तं करेइ ॥७३॥

तत औदारिक तेजःकर्माणि सर्वाभिर्विप्रहाणिभिस्त्यक्त्वा ऋजुश्रेणि प्राप्तोऽस्पर्शद्गतिरुर्ध्वमेकसमयेनाविग्रहेण तत्र गत्वा साकारोपयुक्तः सिध्यति, बुध्यते यावदन्त करोति ॥७३॥

एस खलु सम्मत्तपरक्कमस्स अज्झयणस्स अट्ठे समणेणं भगवया महावीरेणं आघविए पन्नविए परूविए दंसिए उवदंसिए ॥७४॥

एष खलु सम्यक्त्वपराक्रमस्याध्ययनस्यार्थः श्रमणेन भगवता महावीरेणाख्यातः प्ररूपितो दर्शित उपदर्शितः॥७४॥

॥ त्ति बेमि ॥ इति सम्मत्त परक्कमे समत्ते ॥२९॥

॥इति ब्रवीमि ॥ इतिसम्यक्त्वपराक्रमः समाप्तः ॥२९॥

## ॥ अह तवमग्गं तीसइमं अज्झयणं ॥

### ॥ अथ तपोमार्गं त्रिंशमध्ययनम् ॥

जहा उ पावगं कम्मं, रागदोससमज्जियं ।
खवेइ तवसा भिक्खू, तमेगग्गमणो सुण ॥१॥

यथा तु पापकं कर्म, रागद्वेषसमर्जितम् ।
क्षपयति तपसाभिक्षुः, तदेकाग्रमनाः शृणु ॥१॥

पाणिवहमुसावाया, अदत्तमेहुणपरिग्गहा विरओ ।
राईभोयणविरओ, जीवो भवइ अणासवो ॥२॥

प्राणिवधमृषावाद, अदत्तमैथुनपरिग्रहेभ्योविरतः ।
रात्रिभोजनविरतः, जीवो भवति अनास्रवः ॥२॥

पंचसमिओ तिगुत्तो अकसाओ जिइन्दिओ ।
अगारवो य निस्सल्लो, जीवो होइ अणासवो ॥३॥

पंचसमितस्त्रिगुप्तः, अकषायो जितेन्द्रियः ।
अगौरवश्च निःशल्यः, जीवो भवत्यनास्रवः ॥३॥

एएसिं तु विवच्चासे, रागदोससमज्जियं ।
खवेइ उ जहा भिक्खू, तमेगग्गमणो सुण ॥४॥

एतेषां तु विपर्यासे, रागद्वेषसमर्जितम् ।
क्षपयति तु यथा भिक्षुः, तदेकाग्रमनाः शृणु ॥४॥

जहा महातलायस्स, सन्निरुद्धे जलागमे ।
उस्सिंचणाए तवणाए, कमेणं सोसणा भवे ॥५॥

यथा महातडागस्य, संनिरुद्धे जलागमे ।
उत्सिंचनेन तपनेन, क्रमेण शोषणा भवेत् ॥५॥

एवं तु संजयस्सावि, पावकम्मनिरासवे ।
भवकोडीसंचियं कम्मं, तवसा निज्जरिज्जइ ॥६॥

एवं तु संयतस्यापि, पापकर्मनिरास्रवे ।
भवकोटिसंचितं कर्म, तपसा निर्जीर्यते ॥६॥

सो तवो दुविहो वुत्तो, बाहिरब्भन्तरो तहा ।
बाहिरो छव्विहो वुत्तो, एवमब्भन्तरो तवो ॥७॥

तत्तपो द्विविधमुक्तं, बाह्यमाभ्यंतरं तथा ।
बाह्यं षड्विधमुक्तं, एवमाभ्यन्तरं तपः ॥७॥

अणसणमूणोयरिया, भिक्खायरिया य रसपरिच्चाओ ।
कायकिलेसो संलीणया य बज्झो तवो होइ ॥८॥

अनशनमुनोदरिका, भिक्षाचर्या च रसपरित्यागः ।
कायक्लेशःसंलीनता च, बाह्यं तपो भवति ॥८॥

इत्तरिय मरणकाला य, अणसणा दुविहा भवे ।
इत्तरिय सावकंखा, निरवकंखा उ बिइज्जिया ॥९॥

इत्वरिकं मरणकालं च, अनशनं द्विविधं भवेत् ।
इत्वरिकं सावकांक्षं, निरवकांक्षं तु द्वितीयम् ॥९॥

जो सो इत्तरियतवो, सो समासेण छव्विहो ।
सेढितवो पयरतवो, घणो य तह होइ वग्गो य ॥१०॥

यत्त्वित्वरिकं तपः, तत्समासेन षड्विधम् ।
श्रेणितपः प्रतरतपः, घनतपश्च तथा भवति वर्गतपश्च ॥१०॥

तत्तो य वग्गवग्गो, पचमो छट्ठओ पइण्णतवो ।
मणइच्छियचित्तत्थो, नायव्वो होइ इत्तरिओ ॥११॥

ततश्च वर्गवर्गतपः, पंचमं षष्ठं च प्रकीर्णं तपः ।
मनइप्सितं चित्रार्थं, ज्ञातव्यं भवतीत्वरिकम् ॥११॥

जा सा अणसणा मरणे, दुविहा सा वियाहिया ।
सवियारमवियारा, कायचिट्ठं पई भवे ॥१२॥

यत्तदनशनं मरणे, द्विविधं तद्व्याख्यातम् ।
सविचारमविचारं, कायचेष्टां प्रति भवेत् ॥१२॥

अहवा सपरिकम्मा, अपरिकम्मा य आहिया ।
नीहारिमनीहारी, आहारच्छेओ दोसु वि ॥१३॥

अथवा सपरिकर्म, अपरिकर्म चाख्यातम् ।
निर्हारि अनिर्हारि, आहारच्छेदो द्वयोरपि ॥१३॥

ओमोयरणं पंचहा, समासणे वियाहियं ।
दव्वओ खेत्तकालेणं, भावेणं पज्जवेहि य ॥१४॥

अवमौदर्यं पंचधा, समासेन व्याख्यातम् ।
द्रव्येण क्षेत्रेण कालेन, भावेन पर्यवैश्च ॥१४॥

जो जस्स उ आहारो, तत्तो ओमं तु जो करे ।
जहन्नेणेगसित्थाई, एवं दव्वेण ऊ भवे ॥१५॥

यो यस्यत्वाहारः ततोऽवमं तु यः कुर्यात् ।
जघन्येनेक[1]सिक्थकं, एवं द्रव्येण तु भवेत् ॥१५॥

गामे नगरे तह रायहाणिनिगमे य आगरे पल्ली ।
खेडे कव्वडदोणमुहपट्टणमडम्बसंवाहे ॥१६॥

ग्रामे नगरे तथा राजधान्यां, निगमे चाकरे पल्ल्यां ।
खेटे कर्वटे द्रोणमुखे, पत्तनमण्डपसंबाधे ॥१६॥

आसमपए विहारे, सन्निवेसे समायघोसे य ।
थलिसेणाखन्धारे, सत्थे संवट्टकोट्टे य ॥१७॥

आश्रमपदे विहारे, संनिवेशे समाजघोषे च ।
स्थलसेनायां स्कन्धावारे, सार्थे संवर्तकोटे च ॥१७॥

वाडेसु व रत्थासु व, घरेसु वा एवमित्तियं खेत्तं ।
कप्पइ उ एवमाई, एवं खेत्तेण ऊ भवे ॥१८॥

1 एकक्कनल.

वाटेषु वा रथ्यासु वा, गृहेषुवैवमेतावत् क्षेत्रम् ।
कल्पतेत्वेवमादि, एवं क्षेत्रेण तु भवेत् ॥१८॥

पेडा य अद्धपेडा, गोमुत्तिपयंगवीहिया चेव ।
सम्बुकावट्टायगन्तुंपच्चागया छट्ठा ॥१९॥
पेटा चार्धपेटा, गोमूत्रिका पतंगवीथिका चैव ।
शंबूकावर्ता आयतंगत्वापश्चादागता षष्ठी ॥१९॥

दिवसस्स पोरुसीणं, चउण्हंपि उ जत्तिओ भवे कालो ।
एवं चरमाणो खलु, कालोमाणं मुणेयव्वं ॥२०॥
दिवसस्य पौरुषीणां, चतुर्णामपि त्वेतावान् भवेत् कालः ।
एवं चरन्खलु, कालावमत्वं ज्ञातव्यम् ॥२०॥

अहवा तइयाए पोरिसीए, ऊणाइ घासमेसन्तो ।
चऊभागूणाए वा, एवं कालेण ऊ भवे ॥२१॥
अथवा तृतीयायां पौरुष्यां, ऊनायां ग्रासमेषयन् ।
चतुर्भागोनायां वा, एवं कालेन तु भवेत् ॥२१॥

इत्थी वा पुरिसो वा, अलंकिओ वा नलंकिओ वावि ।
अन्नयरवयत्थो वा, अन्नयरेणं व वत्थेणं ॥२२॥
स्त्री वा पुरुषो वा, अलंकृतो वाऽनलंकृतो वापि ।
अन्यतरवयःस्थो वा, अन्यतरेण वा वस्त्रेण ॥२२॥

अन्नेण विसेसेणं, वण्णेणं भावमणुमुयन्ते उ ।
एवं चरमाणो खलु, भावोमाणं मुणेयव्वं ॥२३॥
अन्येन विशेषेण, वर्णेन भावमनुन्मुञ्चन् तु ।
एवंचरन्खलु, भावावमत्वं ज्ञातव्यम् ॥२३॥

दव्वे खेत्ते काले, भावम्मि य आहिया उ जे भावा ।
एएहि ओमचरओ, पज्जवचरओ भवे भिक्खू ॥२४॥

द्रव्ये क्षेत्रे काले भावे, चाख्यातास्तु ये भावाः ।
एतैरवमचरः, पर्यवचरो भवेद् भिक्षुः ॥२४॥

अट्ठविहगोयरग्गं तु, तहा सत्तेव एसणा ।
अभिग्गहा य जे अन्ने, भिक्खायरियमाहिया ॥२५॥

अष्टविधगोचराग्रं तु, तथा सप्तैवैषणाः ।
अभिग्रहाश्च येऽन्ये, भिक्षाचर्यायामाख्याताः ॥२५॥

खीरदहिसप्पिमाई, पणीयं पाणभोयणं ।
परिवज्जणं रसाणं तु, भणियं रसविवज्जणं ॥२६॥

क्षीरदधिसर्पिरादि, प्रणीतं पानभोजनम् ।
परिवर्जनं रसानां तु, भणितं रसविवर्जनं ॥२६॥

ठाणा वीरासणाईया, जीवस्स उ सुहावहा ।
उग्गा जहा धरिज्जन्ति, कायकिलेसं तमाहियं ॥२७॥

स्थानानि वीरासनादीनि, जीवस्य तु सुखावहानि ।
उग्राणि यथा धार्यन्ते, कायक्लेशः स आख्यातः ॥२७॥

एगन्तमणावाए, इत्थीपसुविवज्जिए ।
सयणासणसेवणया, विवित्तसयणासणं ॥२८॥

एकान्तेऽनापाते, स्त्रीपशुविवर्जिते ।
शयनासनसेवनया, विविक्तशयनासनम् ॥२८॥

एसो बाहिरगंतवो, समासेण वियाहिओ ।
अब्भिन्तरं तवं एत्तो, वुच्छामि अणुपुव्वसो ॥२६॥

एतद् बाह्यं तपः, समासेन व्याख्यातम् ।
आभ्यन्तरं तप इतः, वक्ष्येऽनुपूर्वशः ॥२९॥

पायच्छित्तं विणओ, वेयावच्चं तहेव सज्झाओ ।
झाणं च विउस्सग्गो, एसो अब्भिन्तरो तवो ॥३०॥

प्रायश्चित्तं विनयः, वैयावृत्यं तथैव स्वाध्यायः।
ध्यानं च व्युत्सर्गः, एतदाभ्यन्तरं तपः ॥३०॥

आलोयणारिहाईयं, पायच्छित्तं तु दसविहं।
जं भिक्खू वहई सम्मं, पायच्छित्तं तमाहियं ॥३१॥
आलोचनार्हादिकं, प्रायश्चित्तं तु दशविधम्।
यद्भिक्षुर्वहति सम्यक्, प्रायश्चित्तं तदाख्यातम् ॥३१॥

अब्भुट्ठाणं अंजलिकरणं, तहेवासणदायणं।
गुरुभत्तिभावसुस्सूसा, विणओ एस वियाहिओ ॥३२॥
अभ्युत्थानमञ्जलिकरणं, तथैवासनदानम्।
गुरुभक्तिभावशुश्रूषा, विनय एष व्याख्यातः ॥३२॥

आयरियमाईए, वेयावच्चम्मि दसविहे।
आसेवणं जहाथामं, वेयावच्चं तमाहियं ॥३३॥
आचार्यादिके, वैयावृत्ये दशविधे।
आसेवनं यथास्थामं, वैयावृत्यं तदाख्यातम् ॥३३॥

वायणा पुच्छणा चेव, तहेव परियट्टणा।
अणुप्पेहा धम्मकहा, सज्झाओ पञ्चहा भवे ॥३४॥
वाचना प्रच्छना चैव, तथैव परिवर्तना॥
अनुप्रेक्षा धर्मकथा, स्वाध्यायः पंचधा भवेत् ॥३४॥

अट्टरुद्दाणि वज्जित्ता, झाएज्जा सुसमाहिए।
धम्मसुक्काइं झाणाइं, झाणं तं तु बुहा वए ॥३५॥
आर्तरौद्राणि वर्जयित्वा, ध्यायेत् सुसमाहितः।
धर्मशुक्ले ध्याने, ध्यानं तत्तु बुद्धा वदेयुः ॥३५॥

सयणासणठाणे वा, जे उ भिक्खू न वावरे।
कायस्स विउस्सग्गो, छट्ठो सो परिकित्तिओ ॥३६॥

शयनासनस्थाने वा, यस्तु भिक्षुर्न व्याप्रियते ।
कायस्य व्युत्सर्गः, षष्ठः स परिकीर्तितः ॥३६॥

एयं तवं तु दुविहं, जे सम्मं आयरे मुणी ।
से खिप्पं सव्वसंसारा, विप्पमुच्चइ पण्डिओ ॥३७॥

एवंतपस्तुद्विविधं, यत्सम्यगाचरेन्मुनिः ।
सःक्षिप्रं सर्वसंसारात्, विप्रमुच्यते पण्डितः ॥३७॥

॥ त्ति बेमि ॥ इति तवमग्गं समत्तं ॥३०॥
॥ इति ब्रवीमि-इति तपोमार्ग समाप्तं ॥३०॥

---

## ॥ अह चरणविहो एगतीसइमं अज्झयणं ॥

### ॥ अथ चरणविधिनामैकत्रिंशत्तममध्ययन ॥

चरणविहिं पवक्खामि, जीवस्स उ सुहावहं ।
जं चरित्ता बहू जीवा, तिण्णा संसारसागरं ॥१॥

चरणविधिं प्रवक्ष्यामि, जीवस्य तु सुखावहम् ।
यं चरित्वा बहवो जीवाः, तीर्णाः संसारसागरम् ॥१॥

एगओ विरइं कुज्जा, एगओ य पवत्तणं ।
असंजमे नियत्तिं च, संजमे य पवत्तणं ॥२॥

एकतो विरतिं कुर्यात्, एकतश्च प्रवर्तनम् ।
असंयमान्निवृत्तिं च, सयमे च प्रवर्तनम् ॥२॥

रागद्दोसे य दो पावे, पावकम्मपवत्तणे ।
जे भिक्खू रुंभई निच्चं, से न अच्छइ मण्डले ॥३॥

रागद्वेषौ च द्वौ पापौ, पापकर्मप्रवर्तकौ ।
यो भिक्षुः(तौ)निरुणद्धि नित्य, स न तिष्ठति मण्डले ॥३॥

दंडाणं गारवाणं च, सल्लाणं च तियं तियं ।
जे भिक्खू चयई निच्चं, से न अच्छइ मण्डले ॥४॥
दण्डानां गौरवाणां च, शल्यानां च त्रिकं त्रिकम् ।
यो भिक्षुस्त्यजति नित्यं, स न तिष्ठति मण्डले ॥४॥

दिव्वे य जे उवसग्गे, तहा तेरिच्छमाणुसे ।
जे भिक्खू सहइ निच्चं, से न अच्छइ मण्डले ॥५॥
दिव्यान् च य उपसर्गान् , तथा तैरश्चमानुषान् ।
यो भिक्षुः सहते सम्यक्, स न तिष्ठति मण्डले ॥५॥

विगहाकसायसन्नाणं, झाणाणं च दुयं तहा ।
जे भिक्खू वज्जई निच्चं, से न अच्छइ मण्डले ॥६॥
विकथाकषायसंज्ञानां, ध्यानानां च द्विकं तथा ।
यो भिक्षुर्वर्जयति नित्यं, स न तिष्ठति मण्डले ॥६॥

वएसु इन्दियत्थेसु, समिईसु किरियासु य ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥७॥
व्रतेष्विन्द्रियार्थेषु, समितिषु क्रियासु च ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥७॥

लेसासु छसु काएसु, छक्के आहारकारणे ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥८॥
लेश्यासु षट्सु कायेषु, षट्के आहारकारणे ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥८॥

पिण्डोग्गहपडिमासु, भयट्ठाणेसु सत्तसु ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥९॥
पिण्डावग्रहप्रतिमासु, भयस्थानेषु सप्तसु ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥९॥

मदेसु बम्भगुत्तीसु, भिक्खुधम्मम्मि दसविहे ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१०॥
मदेषु ब्रह्मचर्यगुप्तिषु, भिक्षुधर्मे दशविधे ।
योभिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१०॥

उवासगाणं पडिमासु, भिक्खूणं पडिमासु य ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥११॥
उपासकानां प्रतिमासु, भिक्षूणां प्रतिमासु च ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥११॥

किरियासु भूयगामेसु, परमाहम्मिएसु य ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१२॥
क्रियासु भूतग्रामेषु, परमाधार्मिकेषु च ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१२॥

गाहासोलसएहिं, तहा असंजमम्मि य ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१३॥
गाथाषोडशकेषु, तथाऽसंयमे च ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१३॥

बम्भम्मि नायज्झयणेसु, ठाणेसु य समाहिए ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१४॥
ब्रह्मचर्ये ज्ञाताध्ययनेषु, स्थानेषु च समाधेः ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१४॥

एगवीसाए सबले, बावीसाए परीसहे ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१५॥
एकविंशतौ शबलेषु (दोषेषु), द्वाविंशतौ परिषहेषु ।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१५॥

तेवीसाइ सूयगडे, रूवाहिएसु सुरेसु अ।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१६॥

त्रयोविंशतिसंख्येषु सूत्रकृताध्ययनेषु, रूपाधिकेषु सुरेषु च।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१६॥

पणुवीसभावणासु, उद्देसेसु दसाइणं।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१७॥

पंचविंशतिभावनासु, उद्देशेषु दशादीनाम्।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१७॥

अणगारगुणेहिं च, पगप्पम्मि तहेव य।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१८॥

अनगारगुणेषु च, प्रकल्पे तथैव च।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१८॥

पावसुयपसंगेसु, मोहठाणेसु चेव य।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥१९॥

पापसूत्रप्रसंगेषु, मोहस्थानेषु चैव च।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥१९॥

सिद्धाइगुणजोगेसु, तेत्तीसासायणासु य।
जे भिक्खू जयई निच्चं, से न अच्छइ मण्डले ॥२०॥

सिद्धातिगुणयोगेषु, त्रयस्त्रिंशदासातनासु च।
यो भिक्षुर्यतते नित्यं, स न तिष्ठति मण्डले ॥२०॥

इय एएसु ठाणेसु, जे भिक्खू जयई सया।
खिप्पं सो सव्वसंसारा, विप्पमुच्चइ पण्डिओ ॥२१॥

इत्येतेषु स्थानेषु, यो भिक्षुर्यतते सदा ।
क्षिप्रं स सर्वसंसारात्, विप्रमुच्यते पण्डितः ॥२१॥
॥ त्ति बेमि ॥ इति चरणविही समत्ता ॥३१॥
॥ इति ब्रवीमि–इति चरणविधिः समाप्तः ॥३१॥

## ॥ अह पमायट्ठाणं बत्तीसइमं अज्झयणं ॥

### ॥ अथ प्रमादस्थानं द्वात्रिंशत्तममध्ययनं ॥

अच्चन्तकालस्स समूलगस्स, सव्वस्स दुक्खस्स उ जो पमोक्खो।
तं भासओ मे पडिपुण्णचित्ता, सुणेह एगन्तहियं हियत्थं ॥१॥
अत्यंतकालस्य समूलकस्य, सर्वस्य दुःखस्य तु यः प्रमोक्षः ।
तं भाषमाणस्य मम प्रतिपूर्णचित्ताः, शृणुतैकान्तहितं हितार्थम् ॥
नाणस्स सव्वस्स पगासणाए, अन्नाणमोहस्स विवज्जणाए ।
रागस्स दोसस्स य संखएणं, एगन्तसोक्खं समुवेइ मोक्खं ॥२॥
ज्ञानस्य सर्वस्य प्रकाशनया, अज्ञानमोहस्य विवर्जनया ।
रागस्य द्वेषस्य च संक्षयेण, एकान्तसौख्यं समुपैति मोक्षम् ॥२॥
तस्सेस मग्गो गुरुविद्धसेवा, विवज्जणा बालजणस्स दूरा ।
सज्झायएगन्तनिसेवणा य, सुत्तत्थसंचिन्तणया धिई य ॥३॥
तस्यैष मार्गो गुरुवृद्धसेवा, विवर्जना बालजनस्य दूरात् ।
स्वाध्यायैकान्तनिषेवणा च, सूत्रार्थसंचिंतनया धृतिश्च ॥३॥
आहारमिच्छे मियमेसणिज्जं, सहायमिच्छे निउणत्थबुद्धिं ।
निकेयमिच्छेज्ज विवेगजोग्गं, समाहिकामे समणे तवस्सी ॥४॥
आहारमिच्छेन्मितमेषणीयं, साहाय्यमिच्छेन्निपुणार्थबुद्धिम् ।
निकेतमिच्छेद् विवेकयोग्यं, समाधिकामः श्रमणस्तपस्वी ॥४॥

न वा लभेज्जा निउणं सहायं, गुणाहियं वा गुणओ समं वा ।
एगो वि पावाइ विवज्जयन्तो, विहरेज्ज कामेसु असज्जमाणो ॥५॥
न वा लभेत निपुणं साहाय्यं, गुणाधिकं वा गुणतः समं वा ।
एकोऽपि पापानि विवर्जयन् , विहरेत्कामेष्वसजन् ॥५॥

जहा य अण्डप्पभवा बलागा, अण्डं बलागप्पभवं जहा य ।
एमेव मोहाययणं खु तण्हा, मोहं च तण्हाययणं वयन्ति ॥६॥
यथा चाण्डप्रभवा बलाका, अण्डं बलाकाप्रभवं यथा च ।
एवमेव मोहायतनां खलु तृष्णां, मोहं च तृष्णायतनं वदन्ति॥६॥

रागो य दोसो वि य कम्मबीयं, कम्मं च मोहप्पभवं वयन्ति ।
कम्मं च जाइमरणस्स मूलं, दुक्खं च जाईमरणं वयन्ति ॥७॥
रागश्च द्वेषोऽपि च कर्मबीजं, कर्म च मोहप्रभवं वदन्ति ।
कर्म च जातिमरणयोर्मूलं, दुःखं च जातिमरणं वदन्ति ॥७॥

दुक्खं हयं जस्स न होइ मोहो, मोहो हओ जस्स न होइ तण्हा ।
तण्हा हया जस्स न होइ लोहो, लोहो हओ जस्स न किंचणाइं ॥८॥
दुःखं हतं यस्य न भवतिमोहः, मोहो हतो यस्य न भवति तृष्णा ।
तृष्णा हता यस्य न भवति लोभः, लोभो हतो यस्य न किंचन॥८॥

रागं च दोसं च तहेव मोहं, उद्धत्तुकामेण समूलजालं ।
जे जे उवाया पडिवज्जियव्वा, ते कित्तइस्सामि अहाणुपुव्विं ॥९॥
रागं च द्वेषं च तथैव मोहं, उद्धर्तुकामेन समूलजालम् ।
ये ये उपायाः प्रतिपत्तव्याः,तान् कीर्तयिष्यामि यथानुपूर्व्या॥९॥

रसा पगामं न निसेवियव्वा, पायं रसा दित्तिकरा नराणं ।
दित्तं च कामा समभिद्दवन्ति, दुमं जहा साउफलं व पक्खी॥१०॥
रसाः प्रकामं न निषेवितव्याः, प्रायेण रसा दीप्तिकरा नराणाम् ।
दीप्तं च कामाः समभिद्रवन्ति, द्रुमं यथास्वादुफलमिवपक्षिणः१०

जहा दवग्गी पउरिन्धणे वणे, समारुओ नोवसमं उवेइ ।
एविन्दियग्गी वि पगामभोइणो, न बम्भयारिस्स हियाय कस्सई॥११॥
यथा दवाग्निः प्रचुरेन्धने वने, समारुतो नोपशममुपैति ।
एवमिन्द्रियाग्निरपि प्रकामभोजिनः,नब्रह्मचारिणो हिताय कस्यचित्

विवित्तसेज्जासणजन्तियाणं, ओमासणाणं दमिइन्दियाणं ।
न रागसत्तू धरिसेइ चित्तं, पराइओ वाहिरिवोसहेहिं ॥१२॥
विविक्तशय्यासनयंत्रितानां, अवमाशनानां दमितेन्द्रियाणाम् ।
न रागशत्रुर्धर्षयति चित्तं, पराजितो व्याधिरिवौषधैः ॥१२॥

जहा बिरालावसहस्स मूले, न मूसगाणं वसही पसत्था ।
एमेव इत्थीनिलयस्स मज्झे, न बम्भयारिस्स खमो निवासो॥१३॥
यथा विडालावसथस्य मूले , न मूषकाणां वसतिः प्रशस्ता ।
एवमेव स्त्रीनीलयस्य मध्ये, न ब्रह्मचारिणः क्षमो निवासः॥१३॥

न रूवलावण्णविलासहासं, न जंपियं इंगियपेहियं वा ।
इत्थीण चित्तंसि निवेसइत्ता, दट्ठुं ववस्से समणे तवस्सी ॥१४॥
न रूपलावण्यविलासहास्यं, न जल्पितमिगितं प्रेक्षितं वा ।
स्त्रीणां चित्तेनिवेश्य(तत्सर्वं), द्रष्टुं व्यवस्येच्छ्रमणस्तपस्वी॥१४॥

अदंसणं चेव अपत्थणं च, अचिन्तणं चेव अकित्तणं च ।
इत्थीजणस्सारियझाणजुग्गं, हियं सया बम्भवए रयाणं ॥१५॥
अदर्शनं चैवाप्रार्थनं च, अचिन्तनं चैवाकीर्तनं च ।
स्त्रीजनस्यार्यध्यानयोग्यं, हितं सदा ब्रह्मव्रते रतानाम् ॥१५॥

कामं तु देवीहिं विभूसियाहिं, न चाइया खोभइउं तिगुत्ता ।
तहा वि एगन्तहियं ति नच्चा, विवित्तवासो मुणिणं पसत्थो ॥१६॥
कामं तु देवीभिर्विभूषिताभिः, न शकिताः क्षोभयितुं त्रिगुप्ताः ।
तथाप्येकान्तहितमिति ज्ञात्वा,विविक्तवासो मुनीनां प्रशस्तः॥१६॥

मोक्खाभिकंखिस्स उ माणवस्स, संसारभीरुस्स ठियस्स धम्मे।
नेयारिसं दुत्तरमत्थि लोए, जहित्थिश्रो बालमणोहराश्रो ॥१७॥

मोक्षाभिकांक्षिणस्तु मानवस्य, संसारभीरोःस्थितस्य धर्मे।
नैतादृशंदुस्तरमस्ति लोके, यथास्त्रियो बालमनोहराः ॥१७॥

एए य संगे समइक्कमित्ता, सुहुत्तरा चेव भवन्ति सेसा।
जहा महासागरमुत्तरित्ता, नई भवे श्रवि गङ्गासमाणा ॥१८॥

एतांश्चसंगान्समतिक्रम्य, सुखोत्तराश्चैव भवन्ति शेषाः
यथामहासागरमुत्तीर्य, नदी भवेदपि गंगासमाना ॥१८॥

कामाणुगिद्धिप्पभवं खु दुक्खं, सव्वस्स लोगस्स सदेवगस्स।
जं काइयं माणसियं च किंचि, तस्सन्तगं गच्छइ वीयरागो ॥१९॥

कामानुगृद्धिप्रभवं खलु दुःखं, सर्वस्य लोकस्य सदेवकस्य।
यत्कायिकं मानसिकंच किंचित्,तस्यान्तकं गच्छति वीतरागः १९

जहा य किंपागफला मणोरमा, रसेण वण्णेण य भुज्जमाणा।
ते खुड्डए जीविय पच्चमाणा, एश्रोवमा कामगुणा विवागे ॥२०॥

यथा च किंपाकफलानि मनोरमाणि, रसेन वर्णेन च भुज्यमानानि।
तानि क्षोदयंति जीवित पच्यमानानि,एतदुपमाःकामगुणा विपाके॥

जे इन्दियाणं विसया मणुन्ना, न तेसु भावं निसिरे कयाइ।
न यामणुन्नेसु मणं पि कुज्जा, समाहिकामे समणे तवस्सी ॥२१॥

य इन्द्रियाणां विषया मनोज्ञा, न तेषु भावं निसृजेत् कदापि।
न चामनोज्ञेषु मनोऽपि कुर्यात, समाधिकामः श्रमणस्तपस्वी॥२१॥

चक्खुस्स रूवं गहणं वयन्ति, तं रागहेउं तु मणुन्नमाहु।
तं दोसहेउं श्रमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥२२॥

चक्षुषो रूपं ग्रहणं वदन्ति, तद् रागहेतुं तु मनोज्ञमाहुः।
तद्(रूपं) दोषहेतुममनोज्ञमाहुः, समश्च यस्तेषु स वीतरागः॥२२॥

रूवस्स चक्खुं गहणं वयन्ति, चक्खुस्स रूवं गहणं वयन्ति।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥२३॥
रूपस्य चक्षुर्ग्राहकं वदन्ति, चक्षुषो रूपं ग्राह्यं वदन्ति।
रागस्य हेतुं समनोज्ञमाहुः, द्वेषस्य हेतुममनोज्ञमाहुः ॥२३॥

रूवेसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ से विणासं।
रागाउरे से जह वा पयंगे, आलोयलोले समुवेइ मच्चुं ॥२४॥
रूपेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम्।
रागातुरः स यथा वा पतंगः, आलोकलोलः समुपैति मृत्युम् ॥

जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं।
दुद्दन्तदोसेण सएण जन्तू, न किंचि रूवं अवरज्झई से ॥२५॥
यश्चापि द्वेषं समुपैति तीव्रं, तस्मिन्क्षणे स तु समुपैति दुःखम्।
दुर्दान्तदोषेण स्वकेन जन्तुः, न किंचिद्रूपमपराध्यति तस्य॥२५॥

एगन्तरत्ते रुइरंसि रूवे, अतालिसे से कुणई पओसं।
दुक्खस्स सम्पीलमुवेइ वाले, न लिप्पई तेण मुणी विरागो ॥२६॥
एकान्तरक्तो रुचिरे रूपे, एतादृशे सः करोति प्रद्वेषम्।
दुःखस्यसंपीडामुपैति बालः, न लिप्यते तेन मुनिर्विरागी॥२६॥

रूवाणुगासाणुगए य जीवे, चराचरे हिंसइ णेगरूवे।
चित्तेहि ते परितावेइ वाले, पीलेइ अत्तट्ठगुरु किलिट्ठे ॥२७॥
रूपानुगाशानुगतश्च जीवान् , चराचरान् हिनस्त्यनेकरूपान्।
चित्रैस्तान्परितापयति बालः, पीडयति चात्मार्थगुरुः क्लिष्टः ॥

रूवाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे।
वए विओगे य कहं सुहं से, सम्भोगकाले य अतित्तलाभे॥२८॥
रूपानुपातेन परिग्रहेण, उत्पादने रक्षणसंनियोगे।
व्यये वियोगे च क्वसुखं तस्य, संभोगकाले चातृप्तिलाभे॥२८॥

रुवे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥२६॥

रूपेऽतृप्तश्च परिग्रहे, सक्त उपसक्तो नोपैति तुष्टिम् ।
अतुष्टिदोषेण दुःखो परस्य, लोभाविल आदत्तेऽदत्तम् ॥२९॥

तण्हाभिभूयस्स अदत्तहारिणो, रुवे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥३०॥

तृष्णाभिभूतस्यादत्तहारिणः, रूपेऽतृप्तस्य परिग्रहे च ।
मायामृषा वर्धते लोभदोषात् , तत्रापि दुःखान्न विमुच्यते सः॥

मोसस्स पच्छा य पुरत्थओ य, पयोगकाले य दुही दुरन्ते ।
एवं अदत्ताणि समाययन्तो, रूवे अतित्तो दुहिओ अणिस्सो॥३१॥

मृषावाक्यस्य पश्चाच्चपुरस्ताच्च, प्रयोगकाले च दुःखी दुरन्तः ।
एवमदत्तानि समाददानः, रूपेऽतृप्तो दुःखितोऽनिश्रः ॥३१॥

रूवाणुरत्तस्स नरस्स एवं, कुत्तो सुहं होज्ज कयाइ किञ्चि ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तई जस्स कएण दुक्खं॥३२॥

रूपानुरक्तस्य नरस्यैवं, कुतः सुखं भवेत्कदापि किंचित् ।
तत्रोपभोगेऽपि क्लेशदुःखं, निर्वर्तयति यस्य कृते दुःखं॥३२॥

एमेव रूवम्मि गओपओसं, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥३३॥

एवमेव रूपे गतः प्रद्वेषं, उपैति दुःखौघपरम्पराः ।
प्रदुष्टचित्तश्च चिनोति कर्म, यत्तस्य पुनर्भवति दुःखं विपाके॥३३॥

रूवे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पए भवमज्झे वि सन्तो, जलेण वा पोक्खरिणी पलासं ॥

रूपे विरक्तो मनुजो विशोकः, एतया दुःखौघपरम्परया ।
न लिप्यते भवमध्येऽपि सन्, जलेनेव पुष्करिणी पलाशम्॥३४॥

सोयस्स सद्दं गहणं वयन्ति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥३५॥
श्रोत्रस्य शब्दं ग्रहणं वदंति, तं रागहेतुं तु मनोज्ञमाहुः ।
तं द्वेषहेतुममनोज्ञमाहुः, समश्च यस्तेषु स वीतरागः ॥३५॥

सद्दस्स सोयं गहणं वयन्ति, सोयस्स सद्दं गहणं वयन्ति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥३६॥
शब्दस्य श्रोत्रं ग्राहकं वदन्ति, श्रोत्रस्य शब्दं ग्राह्यं वदन्ति ।
रागस्यहेतुं समनोज्ञमाहुः, द्वेषस्य हेतुममनोज्ञमाहुः ॥३६॥

सद्देसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे हरिणमिगे व मुद्धे, सद्दे अतित्ते समुवेइ मच्चुं ॥३७॥
शब्देषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम्।
रागातुरो हरिणमृग इव मुग्धः,शब्देऽतृप्तः समुपैति मृत्युम्॥३७॥

जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दन्तदोसेण सएण जन्तू , न किञ्चि सद्दं अवरुज्झई से ॥३८॥
यश्चापि द्वेषं समुपैति तीव्रं, तस्मिन्क्षणे स तूपैति दुःखम् ।
दुर्दान्तदोषेण स्वकेन जन्तुः, न किंचिच्छब्दोऽपराध्यति तस्य३८

एगन्तरत्ते रुइरंसि सद्दे, अतालिसे से कुणई पओसं ।
दुक्खस्स सम्पीलमुवेइ वाले, न लिप्पई तेण मुणी विरागो ॥३९॥
एकान्तरक्तो रुचिरे शब्दे, अतादृशे सः कुरुते प्रद्वेषम् ।
दुःखस्य संपीडामुपैति वालः, न लिप्यते तेन मुनिर्विरागः॥३९॥

सद्दाणुगासाणुगए य जीवे, चराचरे हिंसइऽणेगरूवे ।
चित्तेहि ते परितावेइ वाले, पीलेइ अत्तट्ठगुरु किलिट्ठे ॥४०॥
शब्दानुगाशानुगतश्च जीवः, चराचरान्हिनस्त्यनेकरूपान् ।
चित्रैस्तान्परितापयति वालः, पीडयति चात्मार्थगुरुः क्लिष्टः॥४०॥

सद्दाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तलाभे ॥४१॥
शब्दानुपातेन परिग्रहेण, उत्पादने रक्षणसंनियोगे ।
व्यये वियोगे च क्वसुखं तस्य, संभोगकाले चातृप्तिलाभे॥४१॥

सद्दे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥४२॥
शब्देऽतृप्तश्च परिग्रहे, सक्त उपसक्तो नोपैति तुष्टिम् ।
अतुष्टिदोषेण दुःखी परस्य, लोभाविल आदत्तेऽदत्तम् ॥४२॥

तण्हाभिभूयस्स अदत्तहारिणो, सद्दे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥४३॥
तृष्णाभिभूतस्यादत्तहारिणः, शब्देऽतृप्तस्य परिग्रहे च ।
मायामृषा वर्धते लोभदोषात् , तत्रापि दुःखान्न विमुच्यते सः४३

मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरन्ते ।
एवं अदत्ताणि समाययन्तो, सद्दे अतित्तो दुहीओ अणिस्सो ॥४४॥
मृषा (वाक्यस्य)पश्चाच्चपुरस्ताच्च,प्रयोगकाले च दुःखो दुरन्तः।
एवमदत्तानि समाददानः, शब्देऽतृप्तो दुःखितोऽनिश्रः ॥४४॥

सद्दाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तई जस्स कएण दुक्खं ॥४५॥
शब्दानुरक्तस्य नरस्यैवं, कुतः सुखं भवेत्कदापि किंचित् ।
तत्रोपभोगेऽपि क्लेशदुःखं, निर्वर्तयति यस्यकृते दुःखम् ॥४५॥

एमेव सद्दम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥४६॥
एवमेव शब्दे गतः प्रद्वेषं, उपैति दुःखौघपरम्पराः ।
प्रदुष्टचित्तश्च चिनोति कर्म, यत्तस्य पुनर्भवति दुःखं विपाके॥४६॥

सद्दे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पए भवमज्झे वि सन्तो, जलेण वा पोक्खरिणीपलासं ॥४७॥
शब्दे विरक्तो मनुजो विशोकः, एतया दुःखौघपरम्परया ।
न लिप्यते भवमध्येऽपि सन्, जलेनेव पुष्करिणी पलाशम्॥४७॥
घाणस्स गन्धं गहणं वयन्ति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥४८॥
घ्राणस्य गन्धं ग्रहणं वदन्ति, तं रागहेतुं तु मनोज्ञमाहुः ।
तं द्वेषहेतुममनोज्ञमाहुः, समश्च यस्तेषु स वीतरागः ॥४८॥
गन्धस्स घाणं गहणं वयन्ति, घाणस्स गन्धं गहणं वयन्ति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥४९॥
गन्धस्य घ्राणं ग्राहकं वदन्ति, घ्राणस्य गन्धं ग्राह्यं वदन्ति ।
रागस्यहेतुं समनोज्ञमाहुः, द्वेषस्य हेतुममनोज्ञमाहुः ॥४९॥
गन्धेसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे ओसहगन्धगिद्धे, सप्पे बिलाओ विव निक्खमन्ते॥५०॥
गंधेषु यो गृद्धिमुपैतितीव्रां, अकालिकं प्राप्नोतिस विनाशम् ।
रागातुर औषधगंधगृद्धः, सर्पो बिलान्निवनिःक्रामन् ॥५०॥
जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दन्तदोसेण सएण जन्तू, न किंचि गन्धं अवरज्झई से ॥५१॥
यश्चापि द्वेष समुपैति तीव्रं, तस्मिन्क्षणे स तूपैति दुःखम् ।
दुर्दान्तदोषेण स्वकेन जन्तुः, न किंचिद् गन्धोऽपराध्यति तस्य॥
एगन्तरत्ते रुइरंसि गन्धे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥५२॥
एकान्तरक्तो रुचिरे गन्धे, अतादृशे स करोति प्रद्वेषम् ।
दुःखस्य संपीडामुपैति बालः, न लिप्यते तेन मुनिर्विरागी॥५२॥

गन्धाणुगासाणुगए य जीवे, चराचरे हिंसइऽणेगरुवे ।
चित्तेहि ते परितावेइ बाले, पीलेइ अत्तट्ठगुरु किलिट्ठे ॥५३॥

गन्धानुगाशानुगतश्च जीवः, चराचरान्हिनस्त्यनेकरूपान् ।
चित्रैस्तान्परितापयति बालः, पीडयत्यात्मार्थगुरुः क्लिष्टः॥५३॥

गन्धाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तलाभे ॥५४॥

गंधानुपातेन परिग्रहेण, उत्पादनेरक्षणसन्नियोगे ।
व्यये वियोगे च क्वसुखं तस्य, संभोगकाले चातृप्तिलाभे ॥५४॥

गन्धे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥५५॥

गन्धेऽतृप्तश्च परिग्रहे, सक्त उपसक्तो नोपैति तुष्टिम् ।
अतुष्टिदोषेण दुःखी परस्य, लोभाविल आदत्तेऽदत्तम् ॥५५॥

तण्हाभिभूयस्स अदत्तहारिणो, गन्धे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥५६॥

तृष्णाभिभूतस्यादत्तहारिणः, गन्धेऽतृप्तस्य परिग्रहे च ।
मायामृषा वर्धते लोभदोषात् , तत्रापि दुःखान्न विमुच्यते सः॥

मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरन्ते ।
एवं अदत्ताणि समाययन्तो, गन्धे अतित्तो दुहिओ अणिस्सो॥५७॥

मृषा(वाक्यस्य)पश्चाच्च पुरस्ताच्च, प्रयोगकाले च दुःखो दुरन्तः
एवमदत्तानि समाददानः, गन्धेऽतृप्तो दुःखितोऽनिश्रः ॥५७॥

गन्धाणु रत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तई जस्स कएण दुक्खं ॥५८॥

गन्धानुरक्तस्य नरस्यैवं, कुतः सुखं भवेत्कदापि किंचित् ।
तत्रोपभोगेऽपि क्लेशदुःखं, निर्वर्तयति यस्य कृते दुःखम् ॥५८॥

एमेव गन्धम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥५६॥
एवमेव गन्धे गतः प्रद्वेषं, उपैति दुःखौघपरम्पराः ।
प्रदुष्टचित्तश्चचिनोति कर्म, यत्तस्य पुनर्भवति दुःखंविपाके॥५९॥

गन्धे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि सन्तो, जलेण वा पोक्खरिणीपलासं॥६०॥
गन्धे विरक्तो मनुजो विशोकः, एतया दुःखौघपरम्परया ।
न लिप्यते भवमध्येऽपि सन्, जलेनेव पुष्करिणी पलाशम् ॥६०॥

जिब्भाए रसं गहणं वयन्ति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥६१॥
जिह्वाया रसं ग्रहणं वदन्ति, तं रागहेतुं तु मनोज्ञमाहुः ।
तं द्वेषहेतुममनोज्ञमाहुः समश्च यस्तेषु स वीतरागः ॥६१॥

रसस्स जिब्भं गहणं वयंति, जिब्भाए रसं गहणं वयन्ति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥६२॥
रसस्य जिह्वां ग्राहिकां वदन्ति, जिह्वाया रसं ग्राह्यं वदन्ति ।
रागस्य हेतुं समनोज्ञमाहुः, द्वेषस्य हेतुममनोज्ञमाहुः ॥६२॥

रसेसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे बडिसविभिन्नकाए, मच्छे जहा आमिसभोगगिद्धे ॥६३॥
रसेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम् ।
रागातुरो बडिशविभिन्नकायः, मत्स्यो यथाऽऽमिषभोगगृध्नः ॥

जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दन्तदोसेण सएण जन्तू, न किंचि रसं अवरुज्झई से ॥६४॥
यश्चापि द्वेषं समुपैति तीव्रं, तस्मिन्क्षणे सतूपैति दुःखम् ।
दुर्दान्तदोषेण स्वकेन जन्तुः, न किंचिद्रसोऽपराध्यति तस्य॥६४॥

एगन्तरत्ते रुइरंसि रसे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ वाले, न लिप्पई तेण मुणी विरागो ॥६५॥
एकान्तरक्तो रुचिरे रसे, अतादृशे स कुरुते प्रद्वेषम् ।
दुःखस्य संपीडामुपैति वालः, न लिप्यते तेन मुनिर्विरागी॥६५॥

रसाणुगासाणुगए य जीवे, चराचरे हिंसइऽणेगरुवे ।
चित्तेहि ते परितावेइ वाले, पीलेइ अत्तट्ठगुरु किलिट्ठे ॥६६॥
रसानुगाशानुगतश्च जीवः, चराचरान्हिनस्त्यनेकरूपान् ।
चित्रैस्तान् परितापयति बालः, पीडयत्यात्मार्थगुरुः क्लिष्टः॥६६॥

रसाणुवाएण परिग्गहेण, उप्पायणे रक्खणसंनिओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तलाभे ॥६७॥
रसानुपातेन परिग्रहेण, उत्पादने रक्षणसंनियोगे ।
व्यये वियोगे च क्व सुखं तस्य, संभोगकालेऽपि चातृप्तिलाभे॥६७॥

रसे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥६८॥
रसेऽतृप्तश्च परिग्रहे, सक्त उपसक्तो, नोपैति तुष्टिम् ।
अतुष्टिदोषेण दुःखी परस्य, लोभाविल आदत्तेऽदत्तम् ॥६८॥

तण्हाभिभूयस्स अदत्तहारिणो, रसे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥६९॥
तृष्णाभिभूतस्यादत्तहारिणः, रसेऽतृप्तस्य परिग्रहे च ।
मायामृषा वर्धते लोभदोषात्,तत्रापि दुःखान्न विमुच्यते सः॥६९॥

मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरन्ते ।
एवं अदत्ताणि समाययन्तो, रसे अतित्तो दुहिओ अणिस्सो॥७०॥
मृषावाक्यस्य पश्चाच्च पुरस्ताच्च, प्रयोगकाले च दुःखी दुरन्तः ।
एवमदत्तानि समाददानः, रसेऽतृप्तो दुःखितोऽनिश्रः ॥७०॥

रसाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तई जस्स कएण दुक्खं ॥
रसानुरक्तस्य नरस्यैवं, कुतः सुखं स्यात् कदापि किंचित् ।
तत्रोपभोगेऽपि क्लेशदुःखं, निर्वर्तयति यस्य कृते दुःखम् ॥७१॥

एमेव रसम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥७२॥
एवमेव रसे गतः प्रद्वेषं, उपैति दुःखौघपरम्पराः ।
प्रदुष्टचित्तश्च चिनोति कर्म, यत्तस्य पुनर्भवति दुःखं विपाके॥७२॥

रसे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि सन्तो, जलेण वा पोक्खरिणीपलासं ॥
रसे विरक्तो मनुजो विशोकः, एतया दुःखौघपरम्परया ।
न लिप्यते भवमध्ये ऽपि सन्, जलेनेव पुष्करिणीपलाशम् ॥७३॥

कायस्स फासं गहणं वयन्ति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥७४॥
कायस्य स्पर्शं ग्रहणं वदन्ति, तं रागहेतुं तु मनोज्ञमाहुः ।
तं द्वेषहेतुममनोज्ञमाहुः, समश्चयस्तेषु स वीतरागः ॥७४॥

फासस्स कायं गहणं वयन्ति, कायस्स फासं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं अमणुन्नमाहु ॥७५॥
स्पर्शस्य कायं ग्राहकं वदन्ति, कायस्य स्पर्शं ग्राह्यं वदन्ति ।
रागस्य हेतुं समनोज्ञमाहुः, द्वेषस्य हेतुममनोज्ञमाहुः ॥७५॥

फासेसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ से विणासं ।
रागाउरे सीयजलावसन्ने, गाहग्गहीए महिसे विवन्ने ॥७६॥
स्पर्शेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नोति स विनाशम् ।
रागातुरःशीतजलावसन्नः, ग्राहगृहीतो महिष इवारण्ये ॥७६॥

जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दन्तदोसेण सएण जन्तू, न किंचि फासं अवरुज्झई से ॥७७॥
यश्चापि द्वेषं समुपैति तीव्रं, तस्मिन्क्षणे स तूपैति दुःखम् ।
दुर्दान्तदोषेण स्वकेन जंतुः, न किंचित्स्पर्शोऽपराध्यति तस्य॥७७॥

एगन्तरत्ते रुइरंसि फासे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो॥७८॥
एकान्तरक्तो रुचिरे स्पर्शे, अतादृशे स कुरुते प्रद्वेषम् ।
दुःखस्य संपीडामुपैति बालः, न लिप्यते तेन मुनिर्विरागी७८

फासाणुगासाणुगए य जीवे, चराचरे हिंसइऽणेगरूवे ।
चित्तेहि ते परितावेइ बाले, पीलेइ अत्तट्ठगुरु किलिट्ठे ॥७९॥
स्पर्शानुगाशानुगतश्च जीवः, चराचरान्हिनस्त्यनेकरूपान् ।
चित्रैस्तान् परितापयति बालः, पीडयत्यात्मार्थगुरुः क्लिष्टः॥

फासाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तलाभे ॥८०॥
स्पर्शानुपातेन परिग्रहेण, उत्पादने रक्षणसंनियोगे ।
व्यये वियोगे च कथं सुखं तस्य, संभोगकाले चातृप्तिलाभे ॥

फासे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥८१॥
स्पर्शेऽतृप्तश्च परिग्रहे, सक्त उपसक्तो नोपैति तुष्टिम् ।
अतुष्टिदोषेण दुःखी परस्य, लोभाविल आदत्तेऽदत्तम् ॥८१॥

तण्हाभिभूयस्स अदत्तहारिणो, फासे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से॥८२॥
तृष्णाभिभूतस्याऽदत्तहारिणः, स्पर्शेऽतृप्तस्य परिग्रहे च ।
मायामृषावर्धते लोभदोषात्, तत्रापि दुःखान्नविमुच्यतेसः॥८२॥

मोसस्स पच्छा य पुरत्थश्रो य, पश्रोगकाले य दुही दुरन्ते ।
एवं श्रदत्ताणि समाययन्तो, फासे अतित्तो दुहिश्रो श्रणिस्सो॥
मृषा वाक्यस्य पश्चाच्च पुरस्ताच्च, प्रयोगकाले च दुःखी दुरन्तः ।
एवमदत्तानि समाददानः, स्पर्शेऽतृप्तो दुःखितोऽनिश्रः ॥८३॥
फासाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ।
तत्थोवभोगेवि किलेसदुक्खं, निव्वत्तई जस्स कएण दुक्खं ॥८४॥
स्पर्शानुरक्तस्य नरस्यैवं, कुतः सुखं भूयात्कदापि किंचित् ।
तत्रोपभोगेऽपि क्लेशदुःखं, निर्वर्तयति यस्य कृते दुःखम्॥८४॥
एमेव फासम्मि गश्रो पश्रोसं, उवेइ दुक्खोहपरंपराश्रो ।
पदुट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥८५॥
एवमेव स्पर्शे गतः प्रद्वेषं, उपैति दुःखौघपरम्पराः ।
प्रदुष्टचित्तश्च चिनोति कर्म, यत्तस्य पुनर्भवति दुःखं विपाके८६
फासे विरत्तो मणुश्रो विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि सन्तो, जलेण वा पोक्खरिणीपलासं ॥
स्पर्शे विरक्तो मनुजो विशोकः, एतया दुःखौघपरम्परया ।
न लिप्यते भवमध्येऽपि सन्, जलेनेव पुष्करिणीपलाशम् ॥८६॥
मणस्स भावं गहणं वयन्ति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं श्रमणुन्नमाहु, समो य जो तेसु स वीयरागो ॥८७॥
मनसो भावं ग्रहण वदन्ति, तं रागहेतु तु मनोज्ञमाहुः
तं द्वेषहेतुममनोज्ञमाहुः, समश्चयस्तेषु स वीतरागः ॥८७॥
भावस्स मणं गहणं वयन्ति, मणस्स भावं गहणं वयन्ति ।
रागस्स हेउं समणुन्नमाहु, दोसस्स हेउं श्रमणुन्नमाहु ॥८८॥
भावस्य मनो ग्राहकं वदन्ति, मनसो भावं ग्राह्यं वदन्ति ।
रागस्य हेतुं समनोज्ञमाहुः, द्वेषस्य हेतुममनोज्ञमाहुः ॥८८॥

भावेसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ से विणासं।
रागाउरे कामगुणेसु गिद्धे, करेणुमग्गावहिए गजे वा ॥८९॥
भावेषु यो गृद्धिमुपैति तीव्रां, अकालिकं प्राप्नुते स विनाशम्।
रागातुरः कामगुणेषु गृद्धः, करेणुमार्गापहृत गज इव ॥८९॥

जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं।
दुद्दन्तदोसेण सएण जन्तू, न किंचि भावं अवरुज्झई से॥९०॥
यश्चापि द्वेषं समुपैति तीव्रं, तस्मिन्क्षणे स तूपैति दुःखम्।
दुर्दान्तदोषेण स्वकेन जंतुः, न किंचिद्भावोऽपराध्यति तस्य ९०

एगन्तरत्ते रुइरंसि भावे, अतालिसे से कुणई पओसं।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो॥९१॥
एकान्तरक्तो रुचिरे भावे, अतादृशे स कुरुते प्रद्वेषम्।
दुःखस्य सपीडामुपैति बालः, न लिप्यते तेन मुनिर्विरागो९१

भावाणुगासाणुगए य जीवे, चराचरे हिंसइऽणेगरूवे।
चित्तेहि ते परितावेइ बाले, पीलेइ अत्तट्ठगुरु किलिट्ठे ॥९२॥
भावानुगाशानुगतश्च जीवः, चराचरान्हिनस्त्यनेकरूपान्।
चित्रैस्तान्परितापयति बालः, पीडयत्यात्मार्थगुरुः क्लिष्टः॥९२॥

भावाणुवाएण परिग्गहेण, उप्पायणे रक्खणसन्निओगे।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्तलाभे॥९३॥
भावानुपातेन परिग्रहेण, उत्पादने रक्षणसंनियोगे
व्यये वियोगे च कथं सुखं तस्य, संभोगकाले चाऽतृप्तिलाभे९३

भावे अतित्ते य परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ९४॥
भावेऽतृप्तश्च परिग्रहे, सक्त उपसक्तो नोपैति तुष्टिम्।
अतुष्टिदोषेण दुःखी परस्य, लोभाविल आदत्तेऽदत्तम् ॥९४॥

तण्हाभिभूयस्स अदत्तहारिणो, भावे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥
तृष्णाभिभूतस्याऽदत्तहारिणः भावेऽतृप्तस्य परिग्रहे च ।
मायामृषा वर्धते लोभदोषात्, तत्रापि दुःखान्न विमुच्यते सः९५

मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरन्ते ।
एवं अदत्ताणि समाययन्तो, भावे अतित्तो दुहिओ अणिस्सो॥
मृषावाक्यस्य पश्चाच्च पुरस्ताच्च, प्रयोगकाले च दुःखी दुरन्तः ।
एवमदत्तानि समाददत्, भावेऽतृप्तो दुःखितोऽनिश्रः ॥९६॥

भावाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि ।
तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तई जस्स कएण दुक्खं ॥९७॥
भावानुरक्तस्य नरस्यैवं, कुतः सुखं स्यात्कदापि किञ्चित् ।
तत्रोपभोगेऽपि क्लेशदुःखं, निवर्तयति यस्य कृते दुःखं ॥९७॥

एमेव भावम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥९८॥
एवमेव भावे गतः प्रद्वेषं, उपैति दुःखौघपरम्पराः ।
प्रदुष्टचित्तश्च चिनोति कर्म, यत्तस्य पुनर्भवति दुःखं विपाके ९८

भावे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि सन्तो, जलेण वा पोक्खरिणीपलासं ॥
भावे विरक्तो मनुजो विशोकः, एतया दुःखौघपरम्परया ।
न लिप्यते भवमध्येऽपि सन्, जलेनेव पुष्करिणीपलाशम् ॥९९॥

एविन्दियत्था य मणस्स अत्था, दुक्खस्स हेउं मणुयस्स रागिणो।
ते चेव थोवं पि कयाइ दुक्खं, न वीयरागस्स करेन्ति किंचि ॥
एवमिन्द्रियार्थाश्च मनसोऽर्थाः, दुःखस्य हेतवो मनुजस्य रागिणः।
ते चैव स्तोकमपि कदापि दुःखं, न वीतरागस्य कुर्वन्ति किंचित्

न कामभोगा समयं उवेन्ति, न यावि भोगा विगइं उवेन्ति ।
जे तप्पश्रोसी य परिग्गही य, सो तेसु मोहा विगइं उवेइ ॥१०१॥

न कामभोगाः समतामुपयन्ति, न चापि भोगा विकृतिमुपयन्ति।
यस्तत्प्रद्वेषी च परिग्रही च, स तेषु मोहाद् विकृतिमुपैति १०१॥

कोहं च माणं च तहेव मायं, लोहं दुगुच्छं अरइं रइं च ।
हासं भयं सोगपुमित्थिवेयं, नपुंसवेयं विविहे य भावे ॥१०२॥

क्रोधं च मानं च तथैव मायां, लोभं जुगुप्सामरतिं रतिं च ।
हास्यं भयं शोकं पुंवेदस्त्रीवेदं, नपुंसकवेदं विविधांश्च भावान् ॥

आवज्जई एवमणेगरूवे, एवंविहे कामगुणेसु सत्तो ।
अन्ने य एयप्पभवे विसेसे, कारुण्णदीणे हिरिमे वइस्से ॥१०३॥

आपद्यत एवमनेकरूपान् , एवंविधान् कामगुणेषु सक्तः ।
अन्यांश्चैतत्प्रभवान् विशेषान्, कारुण्यदीनो ह्रीमान् द्वेष्यः॥१०३॥

कप्पं न इच्छिज्ज सहायलिच्छू, पच्छाणुतावे न तवप्पभावं ।
एवं वियारे अमियप्पयारे, आवज्जई इन्दियचोरवस्से ॥१०४॥

कल्पं नेच्छेत्साहाय्यलिप्सुः, पश्चादनुतापो न तपःप्रभावम् ।
एवं विकारानमितप्रकारान् , आपद्यत इन्द्रियचौरवश्यः १०४॥

तओ से जायन्ति पओयणाइं, निमज्जिउं मोहमहण्णवम्मि ।
सुहेसिणो दुक्खविणोयणट्ठा, तप्पच्चयं उज्जमए य रागी ॥१०५॥

ततस्तस्य जायन्ते प्रयोजनानि, निमज्जयितुं मोहमहार्णवे ।
सुखैषिणो दुःखविनोदनार्थं, तत्प्रत्ययमुद्यच्छति च रागी॥१०५॥

विरज्जमाणस्स य इन्दियत्था, सद्दाइया तावइयप्पगारा ।
न तस्स सव्वे वि मणुन्नयं वा, निव्वत्तयन्ती अमणुन्नयं वा ॥१०६॥

विरज्यमानस्य चेन्द्रियार्थाः, शब्दाद्यास्तावत्प्रकाराः ।
न तस्य सर्वेऽपि मनोज्ञतां वा, निर्वर्तयन्ति अमनोज्ञतां वा १०६॥

एवं स संकप्पविकप्पणासुं, संजायई समयमुवट्ठियस्स ।
अत्थे असंकप्पयओ तओ से, पहीयए कामगुणेसु तण्हा ॥१०७॥

एवं स संकल्पविकल्पनासु, संजायते समतोपस्थितस्य ।
अर्थान्संकल्पयतस्ततस्तस्य, प्रहीयते कामगुणेषु तृष्णा॥१०७॥

स वीयरागो कयसव्वकिच्चो, खवेइ नाणावरणं खणेणं ।
तहेव जं दंसणमावरेइ, जं चन्तरायं पकरेइ कम्मं ॥१०८॥

स वीतरागः कृतसर्वकृत्यः, क्षपयति ज्ञानावरणं क्षणेन ।
तथैव यद् दर्शनमावृणोति, यदन्तरायं प्रकरोति कर्म ॥१०८॥

सव्वं तओ जाणइ पासए य, अमोहणे होइ निरन्तराए ।
अणासवे झाणसमाहिजुत्ते, आउक्खए मोक्खमुवेइ सुद्धे ॥१०९॥

सर्वं ततो जानाति पश्यति च, अमोहनो भवति निरंतरायः ।
अनास्रवो ध्यानसमाधियुक्तः, आयुःक्षये मोक्षमुपैति शुध्यः ॥

सो तस्स सव्वस्स दुहस्स मुक्को, ज बाहई सययं जन्तुमेयं ।
दीहामयं विप्पमुक्को पसत्थो, तो होइ अच्चन्तसुही कयत्थो ॥११०॥

स तस्मात् सर्वस्माद् दुःखान् मुक्तः, यद् बाधते संततंजन्तुमेन
दीर्घामयविप्रमुक्तः प्रशस्तः, ततो भवत्यत्यन्तसुखी कृतार्थः११०

अणाइकालप्पभवस्स एसो, सव्वस्स दुक्खस्स पमोक्खमग्गो ।
वियाहिओ जं समुविच्च सत्ता, कमेण अच्चन्तसुही भवन्ति ॥१११॥

अनादिकालप्रभवस्यैषः, सर्वस्य दुःखस्य प्रमोक्षमार्गः ।
व्याख्यातः यं समुपेत्यसत्त्वाः क्रमेणाऽत्यन्तसुखिनो भवन्ति१११॥

॥ त्ति बेमि ॥ इति पमायट्ठाणं समत्तं ॥३२॥

॥ इति ब्रवीमि ॥ इतिप्रमादस्थानं समाप्तं ॥३२॥

---

## ॥ अह कम्मप्पयडी तेत्तीसइमं अज्झयणं ॥

### ॥ अथ कर्मप्रकृति त्रयस्त्रिंशत्तममध्ययनं ॥

अट्ठ कम्माइं वोच्छामि, आणुपुव्विं जहाकमं ।
जेहिं बद्धो अयं जीवो, संसारे परिवट्टई ॥१॥

अष्ट कर्माणि वक्ष्यामि, आनुपूर्व्या यथाक्रमम् ।
यैर्बद्धोऽयं जीवः, संसारे परिवर्तते ॥१॥

नाणस्सावरणिज्जं, दंसणावरणं तहा ।
वेयणिज्जं तहा मोहं, आउकम्मं तहेव य ॥२॥

ज्ञानस्यावरणं, दर्शनावरणं तथा ।
वेदनीयं तथा मोहं, आयुःकर्म तथैव च ॥२॥

नामकम्मं च गोयं च, अन्तरायं तहेव य ।
एवमेयाइं कम्माइं, अट्ठेव उ समासओ ॥३॥

नामकर्म च गोत्रं च, अन्तरायं तथैव च ।
एवमेतानि कर्माणि, अष्टौ तु समासतः ॥३॥

नाणावरणं पञ्चविहं, सुयं आभिणिबोहियं ।
ओहिनाणं च तइयं, मणनाणं च केवलं ॥४॥

ज्ञानावरणं पंचविधं, श्रुतमाभिनिबोधिकम् ।
अवधिज्ञानं च तृतीयं, मनोज्ञानं च केवलम् ॥४॥

निद्दा तहेव पयला, निद्दानिद्दा पयलपयला य ।
तत्तो य थीणगिद्धी उ, पंचमा होइ नायव्वा ॥५॥

निद्रा तथैव प्रचला, निद्रानिद्रा प्रचलप्रचला च ।
ततश्च स्त्यानगृध्धिस्तु, पंचमा भवति ज्ञातव्या ॥५॥

चक्खुमचक्खूओहिस्स, दंसणे केवले य आवरणे ।
एवं तु नवविगप्पं, नायव्वं दंसणावरणं ॥६॥

चक्षुरचक्षुरवधेः, दर्शने केवले चावरणे ।
एवं तु नवविकल्पं, ज्ञातव्यं दर्शनावरणम् ॥६॥

वेयणीयंपि य दुविहं, सायमसायं च आहियं ।
सायस्स उ बहू भेया, एमेव असायस्स वि ॥७॥

वेदनीयमपि च द्विविधं, सातमसातं चाख्यातम् ।
सातस्य तु बहवो भेदाः, एवमेवाऽसातस्यापि ॥७॥

मोहणिज्जंपि दुविहं, दंसणे चरणे तहा ।
दंसणे तिविहं वुत्तं, चरणे दुविहं भवे ॥८॥

मोहनीयमपि द्विविधं, दर्शने चरणे तथा ।
दर्शने त्रिविधमुक्तं, चरणे द्विविधं भवेत् ॥८॥

सम्मत्तं चेव मिच्छत्तं, सम्मामिच्छत्तमेव य ।
एयाओ तिन्नि पयडीओ, मोहणिज्जस्स दंसणे ॥९॥

सम्यक्त्वं चैव मिथ्यात्वं, सम्यङ्मिथ्यात्वमेव च ।
एतास्तिस्रः प्रकृतयः, मोहनीयस्य दर्शने ॥९॥

चरित्तमोहणं कम्मं, दुविहं तं वियाहियं ।
कसायमोहणिज्जं तु, नोकसायं तहेव य ॥१०॥

चारित्रमोहनं कर्म, द्विविधं तद् व्याख्यातम् ।
कषायमोहनीयं तु, नोकषायं तथैव च ॥१०॥

सोलसविहभेएणं, कम्मं तु कसायजं ।
सत्तविहं नवविहं वा, कम्मं च नोकसायजं ॥११॥

षोडशविधं भेदेन, कर्म तु कषायजम् ।
सप्तविधं नवविधं वा, कर्म च [1]नोकषायजम् ॥११॥
नेरइयतिरिक्खाउं, मणुस्साउं तहेव य ।
देवाउयं चउत्थं तु, आउं कम्मं चउव्विहं ॥१२॥
नैरयिकतिर्यगायुः, मनुष्यायुस्तथैव च ।
देवायुश्चतुर्थं तु, आयुःकर्म चतुर्विधम् ॥१२॥
नामं कम्मं तु दुविहं, सुहमसुहं च आहियं ।
सुभस्स उ बहू भेया, एमेव असुहस्स वि ॥१३॥
नामकर्म तु द्विविधम्, शुभमशुभं चाख्यातम् ।
शुभस्य तु बहवो भेदाः, एवमेवाशुभस्यापि ॥१३॥
गोयं कम्मं दुविहं, उच्चं नियं च आहियं ।
उच्चं अट्ठविहं होइ, एवं नीयं पि आहियं ॥१४॥
गोत्रंकर्म द्विविधं, उच्चं नीचं चाख्यातम् ।
उच्चमष्टविधं भवति, एवं नीचमप्याख्यातम् ॥१४॥
दाणे लाभे य भोगे य, उवभोगे वीरिए तहा ।
पञ्चविहमन्तरायं, समासेण वियाहियं ॥१५॥
दाने लाभे च भोगे च, उपभोगे वीर्ये तथा ।
पंचविधमन्तरायं, समासेन व्याख्यातम् ॥१५॥
एयाओ मूलपयडीओ, उत्तराओ य आहिया ।
पएसग्गं खेत्तकाले य, भावं च उत्तरं सुण ॥१६॥
एता मूलप्रकृतयः, उत्तराश्चाख्याताः ।
प्रदेशाग्रं क्षेत्रकालौ च, भावं चोत्तरं शृणु ॥१६॥
सव्वेसिं चेव कम्माणं, पएसग्गमणन्तगं ।
गण्ठियसत्ताईयं, अन्तो सिद्धाण आहियं ॥१७॥

[1] कषायने पुष्टकरनार हास्यादिजन्य.

सर्वेषां चैव कर्मणां प्रदेशाग्रमनन्तकम् ।
ग्रन्थिकसत्त्वातीतं, अन्तरं सिध्धानामाख्यातम् ॥१७॥

सव्वजीवाण कम्मं तु, संगहे छद्दिसागयं ।
सव्वेसु वि पएसेसु, सव्वं सव्वेण बद्धगं ॥१८॥
सर्वजीवानां कर्म तु, संग्रहे षड्दिशागतम् ।
सर्वैरप्यात्मप्रदेशैः, सर्वं सर्वेण बध्धकम् ॥१८॥

उदहीसरिसनामाण, तीसई कोडिकोडीओ ।
उक्कोसिया ठिई होइ, अन्तोमुहुत्तं जहन्निया ॥१९॥
उदधिसदृङ्नाम्नां, त्रिंशत्कोटाकोटयः ।
उत्कृष्टा स्थितिर्भवति, अन्तर्मुहूर्तं जघन्यका ॥१९॥

आवरणिज्जाण दुण्हंपि, वेयणिज्जे तहेव य ।
अन्तराए य कम्मम्मि, ठिई एसा वियाहिया ॥२०॥
आवरणयोर्द्वयोरपि, वेदनीये तथैव च ।
अन्तराये च कर्मणि, स्थितिरेषा व्याख्याता ॥२०॥

उदहीसरिसनामाण, सत्तरिं कोडिकोडीओ ।
मोहणिज्जस्स उक्कोसा, अन्तोमुहुत्तं जहन्निया ॥२१॥
उदधिसदृङ्नाम्नां, सप्ततिः कोटाकोटयः ।
मोहनीयस्योत्कृष्टा, अन्तर्मुहूर्तं जघन्यका ॥२१॥

तेत्तीस सागरोवमा, उक्कोसेण वियाहिया ।
ठिइ उ आउकम्मस्स, अन्तोमुहुत्तं जहन्निया ॥२२॥
त्रयस्त्रिंशत्सागरोपमा, उत्कर्षेण व्याख्याता ।
स्थितिस्त्वायुःकर्मणः, अन्तर्मुहूर्तं जघन्यका ॥२२॥

उदहीसरिसनामाण, वीसई कोडिकोडीओ ।
नामगोत्ताणं उक्कोसा, अन्तो मुहुत्तं जहन्निया ॥२३॥

उदधिसदृङ्नाम्नां, विंशतिः कोटाकोटयः ।
नामगोत्रयोरुत्कृष्टा, अन्तर्मुहूर्तो जघन्यका ॥२३॥

सिद्धाणणन्तभागो य, अणुभागा हवन्ति उ ।
सव्वेसु वि पएसग्गं, सव्वजीवे अइच्छियं ॥२४॥
सिध्धानामनन्तभागश्च, अनुभागा भवन्ति तु ।
सर्वेष्वपि प्रदेशाग्रं, सर्वजीवेभ्योऽतिक्रान्तम् (अनंताः) ॥२४॥

तम्हा एएसिं कम्माणं, अणुभागा वियाणिया ।
एएसिं संवरे चेव, खवणे य जए बुहो ॥२५॥
तस्मादेतेषां कर्मणां, अनुभागान् विज्ञाय ।
एतेषां संवरे चैव, क्षपणे च यतेत बुधः ॥२५॥

॥ त्ति बेमि ॥ इति कम्मप्पयडी समत्ता ॥३३॥
॥ इति ब्रवीमि–इतिकर्मप्रकृतिः समाप्ता ॥३३॥

---

## ॥ अह लेसज्झयणं णाम चोत्तीसइमं अज्झयणं ॥

### ॥ अथ लेश्याध्ययनंनामचतुस्त्रिंशत्तममध्ययनं ॥

लेसज्झयणं पवक्खामि, आणुपुव्विं जहक्कमं ।
छण्हंपि कम्मलेसाणं, अणुभावे सुणेह मे ॥१॥
लेश्याध्ययनं प्रवक्ष्यामि, आनुपूर्व्या यथाक्रमम् ।
षण्णामपि कर्मलेश्यानां, अनुभावान् शृणुत मम ॥१॥

नामाइं वण्णरसगन्धफासपरिणामलक्खणं ।
ठाणं ठिइं गइं चाउं, लेसाणं तु सुणेह मे ॥२॥
नामानि वर्णरसगन्धस्पर्शपरिणामलक्षणानि ।
स्थानं स्थितिगती चायुः, लेश्यानां तु शृणुत मे ॥२॥

किण्हा नीला य काऊ य, तेऊ पम्हा तहेव य ।
सुक्कलेसा य छट्ठा य, नामाइं तु जहक्कमं ॥३॥
कृष्णा नीला च कापोती च, तेजोपद्मा तथैव च ।
शुक्ललेश्या च षष्ठी च, नामानि तु यथाक्रमम् ॥३॥
जीमूयनिद्धसंकासा, गवलरिट्ठगसन्निभा ।
खंजाजंणनयणनिभा, किण्हलेसा उ वण्णओ ॥४॥
स्निग्धजीमूतसंकाशा, गवलारिष्टकसंनिभा ।
खंजांजननयननिभा, कृष्णलेश्या तु वर्णतः ॥४॥
नीलासोगसंकासा, चासपिच्छसमप्पभा ।
वेरुलियनिद्धसंकासा, नीललेसा उ वण्णओ ॥५॥
नीलाशोकसंकाशा, चाषपिच्छसमप्रभा ।
स्निग्धवैडूर्यसंकाशा, नीललेश्या तु वर्णतः ॥५॥
अयसीपुप्फसंकासा, कोइलच्छदसन्निभा ।
पारेवयगीवनिभा, काऊलेसा उ वण्णओ ॥६॥
अतसीपुष्पसंकाशा, कोकिलच्छदसंनिभा ।
पारापतग्रीवानिभा, कापोतलेश्या तु वर्णतः ॥६॥
हिंगुलयधाउसंकासा, तरुणाइच्चसन्निभा ।
सुयतुण्डपईवनिभा, तेऊलेसा उ वण्णओ ॥७॥
हिंगुलधातुसंकाशा, तरुणादित्यसंनिभा ।
शुकतुण्डप्रदीपनिभा, तेजोलेश्या तु वर्णतः ॥७॥
हरियालभेयसंकासा, हलिद्दाभेयसमप्पभा ।
सणासणकुसुमनिभा, पम्हलेसा उ वण्णओ ॥८॥
हरितालभेदसंकाशा, हरिद्राभेदसमप्रभा ।
[1]सणासनकुसुमनिभा, पद्मलेश्या तु वर्णतः ॥८॥

१ वनस्पतिविशेषं नाम.

संखंककुन्दसङ्कासा, खीरपूरसमप्पभा ।
रययहारसंकासा, सुक्कलेसा उ वण्णश्रो ॥६॥
शंखांक [1]कुन्दसंकाशा, क्षीरपूरसमप्रभा ।
रजतहारसंकाशा, शुक्ललेश्या तु वर्णतः ॥९॥

जह कडुयतुम्बगरसो, निम्बरसो कडुयरोहिणिरसो वा ।
एत्तो वि श्रणन्तगुणो, रसो य किण्हाए नायव्वो ॥१०॥
यथा कटुकतुंबकरसः, निम्बरसः कटुकरोहिणीरसो वा ।
इतोऽप्यनन्तगुणः, रसश्च कृष्णाया ज्ञातव्यः ॥१०॥

जह तिगडुयस्स य रसो, तिक्खो जह हत्थिपिप्पलीए वा ।
एत्तो वि श्रणन्तगुणो, रसो उ नीलाए नायव्वो ॥११॥
यथा [2]त्रिकटुकस्य च रसः, तीक्ष्णो यथा हस्तिपिप्पल्या वा ।
इतोप्यनन्तगुणः, रसस्तु नीलाया ज्ञातव्यः ॥११॥

जह तरुणअम्बगरसो, तुवरकविट्ठस्स वावि जारिसश्रो ।
एत्तो वि श्रणन्तगुणो, रसो उ काऊए नायव्वो ॥१२॥
यथा तरुणाम्रकरसः, [3]तुवरकपित्थस्य वापि यादृशः ।
इतोऽप्यनन्तगुणः, रसस्तु कापोतलेश्याया ज्ञातव्यः ॥१२॥

जह परिणयम्बगरसो, पक्ककविट्ठस्स वावि जारिसश्रो ।
एत्तो वि श्रणन्तगुणो, रसो उ तेऊए नायव्वो ॥१३॥
यथा परिणताम्रकरसः, पक्ककपित्थस्य वापि यादृशः ।
इतोऽप्यनन्तगुणः, रसस्तु तेजोलेश्याया ज्ञातव्यः ॥१३॥

वरवारुणीए व रसो, विविहाण व श्रासवाण जारिसश्रो ।
महुमेरगस्स व रसो, एत्तो पम्हाए परएणं ॥१४॥

१ पुष्पविशेष. २ सुंठ, मरी अने तीखां. ३ काचुं कोठुं.

वरवारुण्या इव रसः, विविधानामिवासवानाम् यादृशः ।
मधुमेरकस्येव रसः, इतः पद्मायाः परकेण (भवति) ॥१४॥

खज्जूरमुद्दियरसो, खीररसो खण्डसक्कररसो वा ।
एत्तो वि अणन्तगुणो, रसो उ सुक्काए नायव्वो ॥१५॥

खर्जूर [1]मृद्वीकयो रसः क्षीररसः खण्डशर्करारसो वा ।
इतोऽप्यनन्तगुणः, रसस्तु शुक्ललेश्याया ज्ञातव्यः ॥१५॥

जह गोमडस्स गन्धो, सुणगमडस्स व जहा अहिमडस्स ।
एत्तो वि अणन्तगुणो, लेसाणं अप्पसत्थाणं ॥१६॥

यथा गोमृतकस्य गन्धः, शुनो मृतकस्येवयथा हेर्मृतकस्य ।
इतोऽप्यनन्तगुणो, लेश्यानां तिसृणामपि ॥१६॥

जह सुरहिकुसुमगन्धो, गन्धवासाण पिस्समाणाणं ।
एत्तो वि अणन्तगुणो, पसत्थलेसाण तिण्हं पि ॥१७॥

यथासुरभिकुसुमगन्धः, गन्धवासानामप्रशस्तानाम् ।
इतोप्यनन्तगुणः, प्रशस्तलेश्यानाम् तिसृणामपि ॥१७॥

जह करगयस्स फासो, गोजिब्भाए य सागपत्ताणं ।
एत्तो वि अणन्तगुणो, लेसाणं अप्पसत्थाणं ॥१८॥

यथा क्रकचस्य स्पर्शः, गोजिह्वायाश्च सागपत्राणाम् ।
इतोऽप्यनन्तगुणः, लेश्यानामप्रशस्तानाम् ॥१८॥

जह बूरस्स व फासो, नवणीयस्स व सिरीसकुसुमाणं ।
एत्तो वि अणन्तगुणो, पसत्थलेसाण तिण्हं पि ॥१९॥

यथा [2]बूरस्येव स्पर्शः, नवनीतस्येव शिरीषकुसुमानाम् ।
इतोप्यनन्तगुणः, प्रशस्तलेश्यानां तिसृणामपि ॥१९॥

१ द्राक्षनो. २ वनस्पति विशेष.

तिविहो व नवविहो वा, सत्तावीसइविहेक्कसीओ वा ।
दुसओ तेयालो वा, लेसाणं होइ परिणामो ॥२०॥
त्रिविधो वा नवविधो वा, सप्तविंशतिविधएकाशीतिविधो वा ।
त्रिचत्वारिंशदधिकद्विशतविधो वा, लेश्यानां भवति परिणामः ॥

पंचासवप्पमत्तो, तीहिं अगुत्तो छसुं अविरओ य ।
तिव्वारम्भपरिणओ, खुद्दो साहसिओ नरो ॥२१॥
पंचास्रवप्रमतः, तिसृभिरगुप्तः षट्स्वविरतश्च ।
तीव्रारंभपरिणतः, क्षुद्रः साहसिको नरः ॥२१॥

निद्धन्धसपरिणामो, निस्संसो अजिइन्दिओ ।
एयजोगसमाउत्तो, किण्हलेसं तु परिणमे ॥२२॥
निर्ध्वंसपरिणामः, निशंसोऽजितेन्द्रियः ।
एतद्योगसमायुक्तः, कृष्णलेश्यां तु परिणमेत् ॥२२॥

इस्सा अमरिस अतवो, अविज्जमाया अहीरिया ।
गेही पओसे य सढे, पमत्ते रसलोलुए ॥२३॥
ईर्ष्याऽमर्षातपः, अविद्या मायाऽह्रीकता ।
गृद्धिः प्रद्वेषश्च (यस्य) शठः, प्रमत्तो रसलोलुपः ॥२३॥

सायगवेसए य आरम्भाओ अविरओ, खुद्दो साहस्सिओ नरो ।
एयजोगसमाउत्तो, नीललेसं तु परिणमे ॥२४॥
सातागवेषकश्चारंभादविरतः, क्षुद्रः साहसिको नरः
एतद्योगसमायुक्तः, नीललेश्यां तु परिणमेत् ॥२४॥

वंके वंकसमायारे, नियडिल्ले अणुज्जुए ।
पलिउंचगओवहिए, मिच्छदिट्ठी अणारिए ॥२५॥
वक्रो वक्रसमाचारः, निःकृतिमाननृजुकः ।
[1]परिकुंचक औपधिकः, मिथ्यादृष्टिरनार्यः ॥२५॥

१ पोताना दोषने ढांकनार.

उप्फालगदुट्ठवाई य, तेणे यावि य मच्छरी।
एयजोगसमाउत्तो, काऊलेसं तु परिणमे ॥२६॥
उत्स्पार्शकदुष्टवादी च, स्तेनश्चापि च मत्सरी।
एतद्योगसमायुक्तः कापोतलेश्यां तु परिणमेत् ॥२६॥
नीयावित्ती अचवले, अमाई अकुऊहले।
विणीयविणए दन्ते, जोगवं उवहाणवं ॥२७॥
नीचैर्वृत्तिरचपलः, अमाय्यकुतूहलः।
विनीतविनयो दान्तः, योगवानुपधानवान् ॥२७॥
पियधम्मे दढधम्मेऽवज्जभीरु हिएसए।
एयजोगसमाउत्तो, तेऊलेसं तु परिणमे ॥२८॥
प्रियधर्मा दृढधर्मा, अवद्यभीरुर्हितैषकः।
एतद्योगसमायुक्तः, तेजोलेश्यां तु परिणमेत् ॥२८॥
पयणुकोहमाणे य, मायालोभे य पयणुए।
पसन्तचित्ते दन्तप्पा, जोगवं उवहाणवं ॥२९॥
प्रतनुक्रोधमानश्च, मायालोभौ च प्रतनुकौ (यस्य)।
प्रशान्तचित्तो दान्तात्मा, योगवानुपधानवान् ॥२९॥
तहा पयणुवाई य, उवसन्ते जिइन्दिए।
एयजोगसमाउत्तो, पम्हलेसं तु परिणमे ॥३०॥
तथा प्रतनुवादी च, उपशान्तो जितेन्द्रियः।
एतद्योगसमायुक्तः, पद्मलेश्यां तु परिणमेत् ॥३०॥
अट्टरुद्दाणि वज्जित्ता, धम्मसुक्काणि झायए।
पसन्तचित्ते दन्तप्पा, समिए गुत्ते य गुत्तिसु ॥३१॥
आर्तरौद्रे वर्जयित्वा, धर्मशुक्लध्याने ध्यायति।
प्रशान्तचित्तो दान्तात्मा, समितो गुप्तश्च गुप्तिभिः ॥३१॥

सरागे वीयरागे वा, उवसन्ते जिइन्दिए
एयजोगसमाउत्तो, सुक्कलेसं तु परिणमे ॥३२॥

सरागो वीतरागो वा, उपशान्तो जितेन्द्रियः ।
एतद्योगसमायुक्तः, शुक्लेश्यां तु परिणमेत् ॥३२॥

असंखिज्जाणोसप्पिणीण, उस्सप्पिणीण जे समया ।
संखाईया लोगा, लेसाण हवन्ति ठाणाइं ॥३३॥

असंख्येयावसर्पिणीनां, उत्सर्पिणीनां ये समयाः ।
संख्यातीता लोकाः, लेश्यानां भवंति स्थानानि ॥३३॥

मुहुत्तद्धं तु जहन्ना, तेत्तीसा सागरा मुहुत्तहिया ।
उक्कोसा होइ ठिई, नायव्वा किण्हलेसाए ॥३४॥

अन्तर्मुहूर्तं तु जघन्या, त्रयस्त्रिंशत्सागरोपमा [1]मुहूर्ताधिका ।
उत्कृष्टा भवति स्थितिः, ज्ञातव्या कृष्णलेश्यायाः ॥३४॥

मुहुत्तद्धं तु जहन्ना, दस उदही पलियमसंखभागमब्भहिया ।
उक्कोसा होइ ठिई, नायव्वा नीललेसाए ॥३५॥

अन्तर्मुहूर्तं तु जघन्या, दशसागरोपमापल्योपमासंख्येयभागाधिका
उत्कृष्टा भवति स्थितिः, ज्ञातव्या नीललेश्यायाः ॥३५॥

मुहुत्तद्धं तु जहन्ना, तिण्णुदही पलियमसंखभागमब्भहिया ।
उक्कोसा होइ ठिई, नायव्वा काउलेसाए ॥३६॥

अंतर्मुहूर्तं तु जघन्या, त्रिसागरोपमापल्योपमा संख्येयभागाधिका ।
उत्कृष्टा भवति स्थितिः, ज्ञातव्या कापोतलेश्यायाः ॥३६॥

मुहुत्तद्धं तु जहन्ना, दोण्णुदही पलियमसंखभागमब्भहिया ।
उक्कोसा होइ ठिई, नायव्वा तेउलेसाए ॥३७॥

अंतर्मुहूर्तं तु जघन्या, द्विसागरोपमा पल्योपमासंख्येयभागाधिका ।
उत्कृष्टा भवति स्थितिः, ज्ञातव्या तेजोलेश्यायाः ॥३७॥

---

१ मरता पहला अंतर्मुहूर्त लेश्या आवे तेथी.

मुहुत्तद्धं तु जहन्ना, दस होन्ति य सागरा मुहुत्तहिया ।
उक्कोसा होइ ठिई, नायव्वा पम्हलेसाए ॥३८॥

अन्तर्मुहूर्तं तु जघन्या, दश भवन्ति च सागरा मुहूर्ताधिकाः ।
उत्कृष्टा भवति स्थितिः, ज्ञातव्या पद्मलेश्यायाः ॥३८॥

मुहुत्तद्धं तु जहन्ना, तेत्तीसं सागरा मुहुत्तहिया ।
उक्कोसा होइ ठिई, नायव्वा सुक्कलेसाए ॥३९॥

अन्तर्मुहूर्तं तु जघन्या, त्रयस्त्रिंशत्सागरोपमा मुहूर्ताधिका ।
उत्कृष्टा भवति स्थितिः, ज्ञातव्या शुक्ललेश्यायाः ॥३९॥

एसा खलु लेसाणं, ओहेण ठिई उ वण्णिया होइ ।
चउसु वि गईसु एत्तो, लेसाण ठिइं तु वोच्छामि ॥४०॥

एषा खलु लेश्यानां, ओघेनस्थितिस्तु वर्णिता भवति ।
चतसृष्वपि गतिष्वितः, लेश्यानां स्थितिं तु वक्ष्यामि ॥४०॥

दस वाससहस्साइं, काउए ठिई जहन्निया होइ ।
तिण्णुदही पलिओवम, असंखभागं च उक्कोसा ॥४१॥

दशवर्षसहस्राणि, कापोतलेश्याः स्थितिर्जघन्यका भवति ।
त्रिसागरोपमापल्योपमा, संख्येयभागाधिका चोत्कृष्टा ॥४१॥

तिण्णुदही पलिओवम, असंखभागो जहन्नेण नीलठिई ।
दसउदही पलिओवमअसंखभागं च उक्कोसा ॥४२॥

त्रिसागरोपमापल्योपमा, संख्येयभागाधिका तु जघन्येन नीलास्थिति. ।
दससागरोपमापल्योपमा संख्येयभागाधिका चोत्कृष्टा(भवति)॥४२॥

दसउदही पलिओवमअसंखभागं जहन्निया होइ ।
तेत्तीससागराइं उक्कोसा, होइ किण्हाए लेसाए ॥४३॥

दशसागरोपमा पल्योपमा, संख्येयभागाधिका जघन्यका भवति ।
त्रयस्त्रिंशत्सागरोपमोत्कृष्टा, भवति कृष्णलेश्यायाः ॥४३॥

एसा नेरइयाणं, लेसाण ठिई उ वण्णिया होइ ।
तेण परं वोच्छामि, तिरियमणुस्साण देवाणं ॥४४॥

एषा नैरयिकाणां, लेश्यानां स्थितिस्तु वर्णिता भवति ।
तेन परं वक्ष्यामि, तिर्यङ्मनुष्याणां(च)देवानां (स्थितिः) ॥४४॥

अन्तोमुहुत्तमद्धं, लेसाण ठिई जहिं जहिं जाउ ।
तिरियाण नराणं वा, वज्जित्ता केवलं लेसं ॥४५॥

अन्तर्मुहूर्ताद्धां, लेश्यानां स्थितिर्यस्मिन्यस्मिन्यास्तु ।
तिरश्चां नराणां वा, वर्जयित्वा[1]केवलां लेश्याम् ॥४५॥

मुहुत्तद्धं तु जहन्ना, उक्कोसा होइ पुव्वकोडीओ ।
नवहि वरिसेहि ऊणा, नायव्वा सुक्कलेसाए ॥४६॥

अन्तर्मुहूर्तं तु जघन्या, उत्कृष्टा भवति पूर्वकोटी ।
नवभिर्वर्षैरूना, ज्ञातव्या शुक्ललेश्यायाः ॥४६॥

एसा तिरियनराणं, लेसाण ठिई उ वण्णिया होइ ।
तेण परं वोच्छामि, लेसाण ठिईउ देवाणं ॥४७॥

एषा (खलु) तिर्यङ्नराणां, लेश्यानां स्थितिस्तु वर्णिता भवति ।
ततः परं वक्ष्यामि, लेश्यानां स्थितिस्तु देवानाम् ॥४७॥

दस वाससहस्साइं, किण्हाए ठिई जहन्निया होइ ।
पलियमसंखिज्जइमो, उक्कोसो होइ किण्हाए ॥४८॥

दशवर्षसहस्राणि, कृष्णायाः स्थितिर्जघन्यका भवति ।
पल्योपमासंख्येयतमभागा, उत्कृष्टा भवति कृष्णायाः ॥४८॥

जा किण्हाए ठिई खलु, उक्कोसा सा उ समयमब्भहिया ।
जहन्नेणं नीलाए, पलियमसंखं च उक्कोसो ॥४९॥

या कृष्णायाः स्थितिः खलु, उत्कृष्टा सा तु समयाभ्यधिका ।
जघन्येन नीलायाः, पल्योपमासंख्येयभागा चोत्कृष्टा ॥४९॥

---

१ शुक्ल लेश्या वर्जीने.

जा नीलाए ठिई खलु, उक्कोसा सा उ समयमब्भहिया।
जहन्नेणं काऊए, पलियमसंखं च उक्कोसा ॥५०॥

या नीलायाः स्थितिः खलु, उत्कृष्टा सा तु समयाभ्यधिका।
जघन्येन कापोतलेश्यायाः, पल्योपमासंख्येयभागा चोत्कृष्टा॥५०॥

तेण परं वोच्छामि, तेऊलेसा जहा सुरगणाणं।
भवणवइवाणमन्तरजोइसवेमाणियाणं च। ॥५१॥

ततः परं वक्ष्यामि, तेजोलेश्याया यथा सुरगणानाम्।
भुवनपतिवानमन्तर, ज्योतिष्कवैमानिकानाम् च ॥५१॥

पलिओवमं जहन्नं, उक्कोसा सागरा उ दुन्नहिआ।
पलियमसंखेज्जेणं, होइ भागेण तेऊए ॥५२॥

पल्योपमं जघन्या, उत्कृष्टा (स्थितिः)सागरोपमे तु द्व्यधिके।
पल्योपमासंख्येयेन, भवति भागेन तेजोलेश्यायाः ॥५२॥

दसवाससहस्साइं, तेऊए ठिई जहन्निया होइ।
दुन्नुदही पलिओवमअसंखभागं च उक्कोसा ॥५३॥

दशवर्षसहस्राणि, तेजोलेश्यायाः स्थितिर्जघन्यका भवति।
द्विसागरोपमा, पल्योपमासंख्येयभागाधिका चोत्कृष्टा ॥५३॥

जा तेऊए ठिई खलु, उक्कोसा सा उ समयमब्भहिया।
जहन्नेणं पम्हाए, दस उ मुहुत्ताहियाइ उक्कोसा ॥५४॥

या तेजोलेश्यायाः स्थितिः खलु, उत्कृष्टा सा तु समयाभ्यधिका।
जघन्येन पद्मायाः, दशसागरोपमात्वन्तर्मुहूर्ताधिकोत्कृष्टा ॥५४॥

जा पम्हाए ठिई खलु, उक्कोसा सा उ समयमब्भहिया।
जहन्नेणं सुक्काए, तेत्तीस मुहुत्तमब्भहिया ॥५५॥

या पद्मलेश्यायाः स्थितिः खलु, उत्कृष्टा सा तु समयाभ्यधिका
जघन्येन शुक्ललेश्यायाः, त्रयस्त्रिंशत्सागरोपमा मुहुर्ताभ्यधिका॥

किण्हा नीला काऊ, तिन्नि वि एयाओ अहम्मलेसाओ ।
एयाहि तिहिवि जीवो, दुग्गई उववज्जई ॥५६॥

कृष्णानीलाकापोता, तिस्रोऽप्येताअधर्मलेश्याः (ज्ञेयाः) ।
एताभिस्त्रिभृभिरपिजीवः, दुर्गतिमुपपद्यते ॥५६॥

तेऊ पम्हा सुक्का, तिन्निवि एयाओ धम्मलेसाओ ।
एयाहि तिहिवि जीवो, सुग्गई उववज्जई ॥५७॥

तेजसी पद्मा शुक्ला, तिस्रोऽप्येता धर्मलेश्याः ।
एताभिस्तिसृभिरपिजीवः, सुगतिमुपपद्यते ॥५७॥

लेसाहिं सव्वाहिं, पढमे समयम्मि परिणयाहिं तु ।
न हु कस्सइ उववाओ, परे भवे अत्थि जीवस्स ॥५८॥

लेश्याभिः सर्वाभिः, प्रथमे समये परिणताभिस्तु ।
न खलु कस्याप्युपपातः, परे भवेऽस्ति जीवस्य ॥५८॥

लेसाहि सव्वाहि, चरिमे समयम्मि परिणयाहिं तु ।
न हु कस्सइ उववाओ, परे भवे होइ जीवस्स ॥५९॥

लेश्याभिः सर्वाभिः, चरमे समये परिणताभिस्तु ।
न खलु कस्याप्युपपातः, परे भवे भवति जीवस्य ॥५९॥

अन्तमुहुत्तम्मि गए, अन्तमुहुत्तम्मि सेसए चेव ।
लेसाहि परिणयाहिं, जीवा गच्छन्ति परलोयं ॥६०॥

अन्तर्मुहूर्ते गते, अन्तर्मुहूर्ते शेषे चैव ।
लेश्याभिः परिणताभिः, जीवा गच्छन्ति परलोकम् ॥६०॥

तम्हा एयासि लेसाणं, आणुभावे वियाणिया ।
अप्पसत्थाओ वज्जित्ता, पसत्थाओऽहिट्ठिए मुणि ॥६१॥

तस्मादेतासां लेश्यानां, अनुभागान्विज्ञाय ।
(लेश्याः) अप्रशस्तास्तु वर्जयित्वा, प्रशस्ता अधितिष्ठेत् मुनिः ॥

त्ति बेमि ॥ इति लेसज्झयणं समत्तं ॥३४॥
॥ इति ब्रवीमि—इति लेश्याध्ययनं समाप्तं ॥३४॥

---

## ॥ अह अणगारज्झयणं णाम पंचतीसइमं अज्झयणं ॥

॥ अथ अणगाराध्ययनंनाम पंचत्रिंशत्तममध्ययनं ॥

सुणेह मे एगग्गमणा, मग्गं बुद्धेहि देसियं ।
जमायरन्तो भिक्खू, दुक्खाणन्तकरे भवे ॥१॥
शृणुत म एकाग्रमनसः, मार्गं बुद्धैर्दशितम् ।
यमाचरन्भिक्षुः, दुःखानामन्तकरो भवेत् ॥१॥

गिहवासं परिच्चज्ज, पवज्जामस्सिए मुणी ।
इमे संगे वियाणिज्जा, जेहिं सज्जन्ति माणवा ॥२॥
गृहवासं परित्यज्य, प्रव्रज्यामाश्रितो मुनिः ।
इमान् संगान् विजानीयात् , यैः (सगैः) सज्यन्ते मानवाः॥२॥

तहेव हिंसं अलियं, चोज्जं अबम्भसेवणं ।
इच्छाकामं च लोभं च, संजओ परिवज्जए ॥३॥
तथैव हिंसामलीकं, चौर्यमब्रह्मसेवनम् ।
[1]इच्छाकामं च लोभं च, संयतः परिवर्जयेत् ॥३॥

मणोहरं चित्तघरं, मल्लधूवेण वासियं ।
सकवाडं पण्डुरुल्लोयं, मणसावि न पत्थए ॥४॥
मनोहरं चित्रगृहं, माल्यधूपेन वासितम् ।
सकपाटं पांडुरोल्लोचं, मनसापि न प्रार्थयेत् ॥४॥

---

१ अप्राप्त वस्तुनी वांछा.

इन्द्रियाणि उ भिक्खुस्स, तारिसम्मि उवस्सए ।
दुक्कराइं निवारेउं, कामरागविवड्ढणे ॥५॥

इन्द्रियाणि तु भिक्षोः, तादृश उपाश्रये ।
दुष्कराणि निवारयितुं, कामरागविवर्धने ॥५॥

सुसाणे सुन्नगारे वा, रुक्खमूले व इक्कओ ।
पइरिक्के परकडे वा, वासं तत्थाभिरोयए ॥६॥

स्मशाने शून्यागारे वा, वृक्षमुले चैकक: ।
प्रतिरिक्ते परकृते वा, वासं तत्राभिरोचयेत् ॥६॥

फासुयम्मि अणाबाहे, इत्थीहिं अणभिद्दुए ।
तत्थ संकप्पए वासं, भिक्खू परमसंजए ॥७॥

प्रासुक अनाबाधे, स्त्रीभिरनभिद्रुते ।
तत्र संकल्पयेद्वासं, भिक्षुः परमसंयतः ॥७॥

न सयं गिहाइं कुव्विज्जा, णेव अन्नेहिं कारए ।
गिहकम्मसमारम्भे, भूयाणं दिस्सए वहो ॥८॥

न स्वयं गृहाणि कुर्यात्, नैवान्यैः कारयेत् ।
गृहकर्मसमारंभे, भूतानां दृश्यते वधः ॥८॥

तसाणं थावराणं च, सुहुमाणं वादराण य ।
तम्हा गिहसमारम्भं, संजओ परिवज्जए ॥९॥

त्रसानां स्थावराणां च, सूक्ष्माणां वादराणां च ।
तस्माद् गृहसमारंभं, संयतः परिवर्जयेत् ॥९॥

तहेव भत्तपाणेसु, पयणे पयावणेसु य ।
पाणभूयदयट्ठाए, न पए न पयावए ॥१०॥

तथैव भक्तपानेषु, पचने पाचने च ।
प्राणभूतदयार्थं, न पचेन्न पाचयेत् ॥१०॥

जलधन्ननिस्सिया जीवा, पुढवीकट्ठनिस्सिया ।
हम्मन्ति भत्तपाणेसु, तम्हा भिक्खू न पयावए ॥११॥
जलधान्यनिश्रिता जीवाः, पृथिवीकाष्ठनिश्रिताः ।
हन्यन्ते भक्तपानेषु, तस्माद् भिक्षुर्न पाचयेत् ॥११॥

विसप्पे सव्वओ धारे, बहुपाणिविणासणे ।
नत्थि जोइसमे सत्थे, तम्हा जोइं न दीवए ॥१२॥
विसर्पत्सर्वतो धारं, बहुप्राणिविनाशनम् ।
नास्ति ज्योतिःसमं शस्त्रं, तस्माज्ज्योतिर्न दीपयेत् ॥१२॥

हिरण्णं च जायरूवं च, मणसा वि न पत्थए ।
समलेट्ठुकंचणे भिक्खू, विरए कयविक्कए ॥१३॥
हिरण्यं च [1]जातरूपं च, मनसापि न प्रार्थयेत् ।
समलेष्टुकांचनो भिक्षुः, विरतः क्रयविक्रयात् ॥१३॥

किणन्तो कइओ होइ, विक्किणन्तो य वाणिओ ।
कयविक्कयम्मि वट्टन्तो, भिक्खू न भवइ तारिसो ॥१४॥
क्रीणन् क्रायको भवति, विक्रीणानश्च वणिक् ।
क्रयविक्रये वर्तमानः, भिक्षुर्नभवति तादृशः ॥१४॥

भिक्खियव्वं न केयव्वं, भिक्खुणा भिक्खुवत्तिणा ।
कयविक्कओ महादोसो, भिक्खवत्ती सुहावहा ॥१५॥
भिक्षितव्यं न क्रेतव्यं, भिक्षुणा भिक्षुवृत्तिना ।
क्रयविक्रययोर्महान् दोषः,(भवति)भिक्षावृत्तिः सुखावहा॥१५॥

समुयाणं उंछमेसिज्जा, जहासुत्तमणिन्दियं ।
लाभालाभम्मि संतुट्ठे, पिण्डवायं चरे मुणी ॥१६॥
समुदानमुञ्छमेषयेत्, यथासूत्रमनिन्दितम् ।
लाभालाभयोः सन्तुष्टः, पिण्डपातं चरेन् मुनिः ॥१६॥

1 चांदी.

